# राजस्थानस्याधुनिका:
# संस्कृत कथालेखकाः

सम्पादक- डॉ० [illegible]

राजस्थान साहित्य अकादमी, उदयपुर

RAJASTHANASYAADHUNIKA SANSKRIT KATALEKHAKA



Edited By: Dr. Pushkardatta Sharma

प्रकाशक : राजस्थान साहित्य अकादमी, उदयपुर
मुद्रक : मेसर्स महावीर प्रिन्टिंग प्रेस, उदयपुर
संस्करण : मार्च, 1980
मूल्य : सत्रह रुपये मात्र

## प्रकाशकीयम्

'राजस्थान साहित्य अकादमी' राज्य हिन्दी, संस्कृतयोस्तथा राजस्थानी भाषायाः साहित्योन्नत्यै सर्वथा समर्पितं संस्थानं वर्तते।

एतत् संस्थानं स्व नानाविध प्रवृत्तीनां माध्यमेन प्रदेशे साहित्यस्योन्नयनाय, जागरणाय साहित्यसर्जनाय च पूर्णरूपेण प्रयत्नशीलमस्ति।

संस्थानस्यैका विशिष्टप्रवृत्तिः राजस्थान प्रदेशस्य साहित्य सर्जनशीलानां विदुषां कृतीनां प्रकाशनमप्यस्ति। अस्या योजनाया अन्तर्गताद्यावधि शताधिक ग्रन्थानां प्रकाशनं सम्पन्नम्। प्रकाशितेष्वनेकेषु ग्रन्थेषु संस्कृत वाङमयस्याप्यनेके ग्रन्था सम्मिलिता सन्ति।

राजस्थानस्याधुनिक साहित्य-सर्जकानां संस्कृत लेखकानामिदं सङ्कलनं पाठकेभ्यः प्रस्तुतं कुर्वदिदं संस्थानं परमं हर्षमनुभवति। राजस्थानस्य संस्थानस्य संस्कृतज्ञ अद्यापि जनजीवनेन सह संयुज्य गाम्भीर्येण, तल्लीनतया सूक्ष्मदृष्ट्या च यदनुभवति तत् सुचारुतया अभिव्यक्तं विधाय जनमानसेषु स्थानं विदधाति अस्मिन् सङ्कलने प्रकाशिता कथा अस्य प्रमाणमस्ति।

साहित्य अकादमी आशास्ते संस्कृतज्ञेभ्यः विद्वद्भ्यः एतत् सङ्कलनं रोचिष्यते, येनसंस्थानं प्रोत्साहितमुत्तरोत्तरं कार्यं भूयोपि द्विगुणोत्साहेन कुर्यात्।

उदयपुर
मार्च १९८०

राजेन्द्र शर्मा
निदेशक

सम्पादकीयम् /१

# कथानुक्रम

व्यवहारक्षमा भाषाया नैसर्गिकता प्रतिपादयन्ति । पद्यमुनम लयाधारित-ध्वनिमाधुर्यं स्मरणसौकर्यं चाऽन्वेष्टुकामा सहृदयास्तु न जातु प्रहृष्येयुरलङ्कृतिशून्येनाऽनेन गद्येन । न तेषां मनस्तन्नानुमायति । गद्यस्य विरामोऽनेन हेतुना विष्टम्भमिवायात् ।

तथाप्येतन्नाशङ्कनीय यदेतद् गद्य सर्वथैवानादृतमासीत् । प्रत्युत व्याख्य ग्रन्थे नु गद्यस्यालम्बनमेवाऽश्रियत । तथ्यस्याऽस्य पुष्टिस्तु सर्वथैव ध्रुनातनसदृशे गद्ये सरचितेन यास्काचार्यस्य निरुक्तेन महर्षिपतञ्जलेश्च महाभाष्येण सहजमेव विधीयते, यथा—

"एवं हि श्रूयते । बृहस्पतिरिन्द्राय दिव्यं वर्षसहस्रं प्रतिपदोक्तानां शब्दानां शब्दपारायणं प्रोवाच । नान्तं जगाम । बृहस्पतिश्च प्रवक्तेन्द्रश्चाध्येता दिव्यं वर्षसहस्रमध्ययनकालो न चान्तं जगाम ।"

(महाभाष्यात्)

सूत्रसाहित्य तु समग्रमेव गद्यविधामेवाऽऽश्रयते । पाणिनिरचिताऽष्टाध्यायीनाम्नि विश्वविश्रुते व्याकरणग्रन्थे तु "अदर्शनं लोपः" "साधकतमं करणम्" "कर्तुरीप्सिततमं कर्म" इत्यादिभिः सूत्रैर्गद्यस्य नैर्मल्यं सक्षेपणीयता निस्सन्दिग्धमेवाभिव्यज्यते । कौटिल्यकृतेऽर्थशास्त्रेऽपि लघुतरैर्वाक्यैः सरचितं गद्यं किमपि रमणीयत्वमाधत्ते, यथा—

"दर्शने प्रहृष्यति । वाक्यं प्रतिगृह्णाति । आसनं ददाति । विविक्तो दर्शयते । शङ्कास्थाने नातिशङ्कते । कथायां रमते । परिज्ञाप्येष्ववेक्षते । पथ्यमुक्त सहते । स्मयमानो नियुङ्क्ते । हस्तेन स्पृशति । श्लाघ्येनोपहसति ।"

अभिव्यञ्जनाक्षममेतादृश गद्यमाङ्ग्लेलेखकस्य फ्रैंसिस बेकन महोदयस्य चित्रं न गद्य सम्यगेव व्यक्तीकरोति ।

अस्मिन् युगे समस्तपदावलीनां प्रयोगोऽपि यदा कदा विधीयते स्म । तन्निदर्शनं बौद्धविदुषाऽऽर्यशूरेण रचितायां जातकमालायां कर्तुं पार्यते, यथा—

"अथ कदाचित्तस्य महासत्त्वस्य भोजनकाले स्नानानुलिप्तगात्रस्य कुशलोदारसूदोपकल्पिते समुपस्थिते वर्णगन्धरसस्पर्शादिगुणसमुदिते विचित्रे भक्ष्यभोज्यादिविधौ तत्पुण्यसम्भाराभिवृद्धिकामो ज्ञानाग्निनिर्दग्धसर्वक्लेशेन्धनः प्रत्येकबुद्धस्तद् गृहमभिजगाम भिक्षार्थी ।"

दर्शनशास्त्रमदृशे शुष्के विषयेऽपि यादृशं गद्यं प्रयुक्तं, तत् सर्वथैव सरलं रोचिष्णु च, यथा—

"इच्छयाऽऽप्तमानमुपलभामहे। कथमिति? उपलब्धपूर्वे ह्यभिप्रेते भवतीच्छा। यथा मेरुमुत्तरेण यान्यस्मज्जातीयैरनुपलब्धपूर्वाणि स्वादूनि वृक्षफलानि न तानि प्रत्यस्माकमिच्छा भवति।"

(शङ्कराचार्यस्य भाष्यात्)

नैयायिकानां विवेचनेष्वपि यदा कदा लालित्येन समन्विता व्यङ्ग्योक्ति मिश्रालङ्कृता वाक्यरचना दृष्टिपथमायाति यथा—

"आः क्षुद्रतार्किक! सर्वथाऽनभिज्ञोऽसि ब्रह्मैव जीवात्मानो नहि ततोऽन्ये। नहि दहनपिण्डाद् भेदेनापि भान्तः स्फुलिङ्गा अग्निस्वरूपा भवन्ति। तत् किं ब्रह्मण एवाविद्या? न च ब्रह्मणो ऽविद्या?"

(जयन्तभट्टस्य न्यायमञ्जरीतः)

पौराणिकं गद्यमपि न खलु काव्यसुषमया विरहितम्। प्रत्युत तस्मिंस्तु प्रसादगुणोपेतमलङ्कृतञ्च गद्यं साक्षात्कर्तुं शक्यते यथा श्रीमद्भागवते रम्यप्रकृति वर्णनाय समायोजितेयं सुदीर्घललितपदसमासावली द्रष्टव्यतामेति—

'तेषां विशीर्यमाणानामतिमधुरसुरभिसुगन्धि बहुलारुणरसोदेनारुणोदा नाम नदी मन्दर गिरिशिखरान्निपतन्ती पूर्वेणेलावृतमुपप्लावयति। यदुपजोषणाद् भवान्या अनुचरीणां पुण्यजनवधूनामवयवस्पर्शसुगन्धवातो दशयोजनं समन्तादनुवासयति।'

गद्यकाव्यस्य समारम्भः

सुबन्धु-दण्डि-बाणादिभ्यः प्राक् कानिचिद् मनोहारीणि गद्यकाव्यान्यविद्यन्त, परमधुना तु तेषां नामोल्लेख एव समुपलभ्यते। यथा खलु कात्यायनेन स्ववार्तिके कस्यचिद् "वासवदत्ताया" पतञ्जलिना 'वासवदत्ता सुमनोत्तराभैमरथीनाम्,' भोजेन शृंगारप्रकाशे "मनोवतीसातकर्णीहरणयो" दण्डिना दशकुमारचरिते 'मनोवत्या' श्रीपालितेन 'तरङ्गवत्या' रामिलसौमिलाभ्यां कस्यचित् 'शूद्रककथाया' बाणेन च "भट्टारहरिश्चन्द्रस्य" उल्लेख कृतोऽस्ति—किन्तु साम्प्रतं स्वेतासु नैकाऽपि कृतिरवाप्यते। तथाप्येतत् स्पष्टं यद् बाणादिभ्यः प्राक् ललितगद्यस्य काऽपि सुदीर्घपरम्पराऽविद्यत यया खलु दण्डिसुबन्धुबाणादयोऽनुप्रेरिता अजायन्त।

सुबन्धोर्वासवदत्तायां प्रत्यक्षरश्लेषालङ्कारस्य प्राचुर्येण विचित्रमिव काव्यस्वरूपं प्रस्तूयते। क्लिष्टता तु तत्रेदृशी विद्यते यद्विद्वद्वरेण्या अपि क्वचित् क्वचित् शब्दकोषानालोकयितुं प्रबाध्यन्ते। सभङ्गाभङ्गोभयविधश्लेषस्तेन प्रयुक्तोऽस्ति, यथा—

"बालिनमिवाङ्गदोपशोभितं, कुहूकण्ठमिव हारिकण्ठं, कनकमृगमिव रामाकर्षणनिपुणं, जयन्तमिव वचनामृतनन्दितवृद्धश्रवसं, कृष्णमिव कं सहर्षं न कुर्वन्तम् ..."

अन्येऽपि विरोधाभासोत्प्रेक्षादयोऽलङ्कारास्तत्र चमत्कृतिमुत्पादयन्ति। समासबाहुल्यजनिता पदानां सुदीर्घता तु तत्र प्रतिपृष्ठमाभाति, यथा—

"मध्ये मदकलकलहंससारसरसितोद्भ्रान्तभाकूटविकटपुच्छच्छटा— ध्यानूनविकचकमलखण्डविगलितमकरन्दबिन्दुसन्दोहसुरभितसलिलया ..."

सत्यमेव "कला कलायै" इत्येष सिद्धान्तो वासवदत्तायां प्रतिपदं प्रत्यक्षीकर्तुं पार्यते। पाण्डित्यप्रदर्शनस्य त्वियत्तैव न विद्यते तत्र। बाणभट्टस्त्वनया हृत्याऽभिभूतमन् कथयामास—

"कवीनामगलद् दर्पो नूनं वासवदत्तया।
शक्त्येव पाण्डुपुत्राणां गतया कर्णगोचरम्॥"

सुबन्धोस्तुलनायां दशकुमारचरितस्य लेखको दण्डी श्लेषविरहितं बोधगम्यं च गद्यं प्रयुङ्क्ते। एतदीये गद्ये सारल्यं सुबोधता च सर्वत्रैव वरीवर्ति। पदलालित्येन त्वेष कविर्जगति प्रसिद्ध्यति। संस्कृतसाहित्ये त्वेतत् पदलालित्यं दण्डिनः कालिदासादिसमत्वमेवानयति, यथा—

"उपमा कालिदासस्य भारवेरर्थगौरवम्।
दण्डिनः पदलालित्यं माघे सन्ति त्रयो गुणाः।"

एतदीयं गद्यं प्रसादगुणेनोपेतम्, श्लेषादिना विरहितम्, भावाभिव्यक्तिवैशद्येन संपृक्तं रसनिर्भरं च विद्यते, यथा—

"अहमपि देवस्यान्वेषणाय महीमटन् कदाचिदम्बरमध्यगतस्याम्बरमणेः किरणमसहिष्णुरेकस्य गिरितटमहीरुहस्य प्रच्छायशीतले तले क्षणमुपाविशम्। मम पुरोभागे दिनमध्यसंकुचितसर्वावयवां कूर्माकृतिं मानुषच्छायां निरीक्ष्योन्मुख-

गगनतलान्महारयेण पतन्तं कञ्चिदन्तराल एव दयोरनतहृदयोऽहमवलम्ब्य शनैरवनितले निक्षिप्य ‍- त भृगुपतनकारणमपृच्छम्।

कथाऽऽख्यायिकायो चरमोत्कर्षः

सम्राजो हर्षवर्द्धनस्य समकालीनो बाणभट्टस्तु सर्वानेव गद्यलेखकान् निस्सन्दिग्धमतिशेते। स खलु गद्यसाहित्याकाशे भास्कर इव दीप्यते। न कोऽपि विषयोऽवशिष्यते, यस्तेन कादम्बर्यां हर्षचरिते वा नैव वर्णितः। अतएव कथितम्—

"बाणोच्छिष्टं जगत् सर्वम्।"

तदीया कादम्बरी तु रसज्ञानां कृतेऽनाहारमिव जनयति, यथा—

"कादम्बरीरसज्ञानामाहारोऽपि न रोचते।"

गद्यकाव्यस्य कथाख्यायिकेति द्वे रूपे बाणभट्टेनैव सर्वप्रथमं प्रस्तुतीक्रियेते। आख्यायिकाया समारम्भोऽपि तेनैवाऽऽश्रियत। उभयोरपि गद्यकाव्यादर्शयोः काचनोदात्तप्रतिभा, मौलिकोद्भावना, विशदा च वर्णनशैली साक्षात्कर्तुं शक्यते। नात्र केवलं पदलालित्यं प्रत्यक्षरं वा श्लेषमयत्वमनुमन्येयम्। अत्र तु सुबन्धुदण्डिनो गद्यशैली कञ्चनादभुतं समन्वयमवाप्य भृशं चकास्ति। परं यदा स बाणभट्टोऽपाण्डित्याण्डव प्रस्तुतीकरोति, तदा तु साक्षाद् वाग्देवी प्रागल्भ्यमवाप्य बाणरूपेऽवतरितेवाभाति। यथा च कथितम्—

''जाता शिखण्डिनी प्राक् यथा शिखण्डी तथावगच्छामि।
प्रागल्भ्यमधिकमाप्तुं वाणी बाणो बभूवेति।''

यदा च स ललितपदावलीमाश्रित्य माधुर्यगुणं प्रयुङ्क्ते, तदा तु वाग्देवी रुचिरस्वरवर्णपदा तरणीव जगन्मनो हर्तुं कल्पते, यथा—

"रुचिरस्वर वर्णपदा रसभाववती जगन्मनो हरति।
सा किं तरुणी ? नहि, नहि, वाणी बाणस्य मधुरशीलस्य।"

तदीय गद्य सौन्दर्यं कियदनुपमेयमिति प्रदर्शयितुं विरोधाभासालङ्कारस्यैकमुदाहरणं प्रस्तुतीक्रियते। तद्यथा—

'यत्र च मलिनता हविर्धूमेषु, न चरितेषु मुखरागः शुकेषु न कोपेषु, तीक्ष्णता कुशाग्रेषु न स्वभावेषु चञ्चलता कदलीदलेषु न मनःसु, चक्षुराग

कोकिलेषु न परकलत्रेषु, कण्ठग्रहः कमण्डलेषु न सुरतेषु, मेखलाबन्धो व्रतेषु नेर्ष्याकलहेषु, स्तनस्पर्शो होमधेनुषु न कामिनीषु, पक्षपातः शुकवायुषु न विद्याविनोदेषु भ्रान्तिरनलप्रदक्षिणासु न शास्त्रेषु, वसुसंकीर्तनं दिव्यकथासु न तृष्णासु, गणना रुद्राक्षवलयेषु न शरीरेषु, मुनिबालनाशः ऋतुदीक्षया न मृत्युना, रामानुरागो रामायणेन न यौवनेन, मुखभङ्गविकारो जरया न धनाभिमानेन"

समस्तपदावल्याश्च मनोहारिता दिव्येऽच्छोदसरसि स्नानार्थं गतस्य चित्ररथेनाऽभिगन्तुं शक्यते, यथा—

मधुमदविडम्बित मधुकरवदम्बकसवाह्यमानलतादोलेषु, उत्फुल्लपल्लवलवलीलायमानमत्तकोकिलोल्लासित मधुशीकरोद्दामदुर्दिनेषु, प्रोषितजनजायाजीवोपहारहृष्ट मन्मथास्फालितचापरवभयस्फुटितपथिक हृदयरुधिरार्द्रीकृतमार्गेषु, अविरत पतत्कुसुमशर पतत्रिपत्रमर्मरमुखर बधिरीकृतदिङ्मुखेषु, दिवापि प्रवृत्तमदनरागान्धाभिसारिकासार्थं सङ्कुलेषु, उद्वेलितरसमागरपूरप्लावितेषु, सकलजीवलोकहृदयानन्ददायकेषु मधुमासदिवसेष्वेकदाऽहमम्बया सह मधुविस्तारशोभं प्रोत्फुल्लनवनलिन कुमुद कुवलयकल्हारमिदमच्छोदं सरः स्नातुमभ्यपतम्।"

लघुतमानां वाक्यानां निर्माणेऽपि बाणभट्टो विचक्षण इवाभाति। एतदर्थमेकमेवोदाहरणमत्र प्रस्तूयते—

"न परिचयं रक्षति। नाभिजनमीक्षते। न रूपमालोकयते। न कुलक्रममनुवर्तते। न शीलं पश्यति। न वैदग्ध्यं गणयति। न श्रुतमाकर्णयति। न धर्ममनुरुध्यते, न त्यागमाद्रियते। न विशेषज्ञतां विचारयति। नाचारं पालयति। न सत्यमनुबुध्यते। न लक्षणं प्रमाणीकरोति"

सत्यमेवेदृशं प्रवाहमयं नैसर्गिकं च गद्यं प्रणेतुं न कोऽप्यन्यो गद्यलेखकः कदापि पारयामास। एतादृग् वैदग्ध्यं कलात्मकश्लोकपाऽद्भुता च वाक्यरचना न कुत्राप्यन्यत्र समवाप्तुं शक्यते। वस्तुतो बाणभट्टस्य गद्यकाव्यं प्रकाशमानो दीपस्तम्भ इव सन्तिष्ठते। तत्प्रकाशेनेतराः कृतयो मार्गान्वेषणमिव विदधाति। निष्प्रपंचं बाणभट्टः सर्वेषां गद्यलेखकानां श्रेष्ठः। तदनुकरणं तु सर्वथैवासाध्यम्।

परवर्तिषु चम्पूकाव्येष्वपि पद्येन सार्धं गद्यमप्युपलभ्यते। गद्य-पद्याभ्यां मिश्रितेष्वप्येषु परिष्कृतं बहुशोऽलङ्कृतं च गद्यं वरीवर्तते। विशेषतस्तु त्रिविक्रमभट्टस्य 'नलचम्पूकाव्यम्' भोजस्य 'रामायणचम्पूकाव्यं' वेंकटाध्वरेः "विश्वगुणादर्श-

चम्पूकाव्यम्', सोमदेवस्य "यशस्तिलक चम्पूकाव्यम्', हरिश्चन्द्रस्य जीवंधर चम्पूकाव्यम्" तथा च अनन्तकवे 'भारतचम्पूकाव्यम्' उल्लेखनीयानि विद्यन्ते। एषु सर्वेषुग्रन्थेषु दण्डि बाणभट्टादीनां गद्यशैल्या प्रभावः सर्वत्र दरीदृश्यते। गद्यमेवेतादृश गद्यमत्रोदाह्रियते—

'यस्मिन्ननवरतप्रवृत्तमखधूमोपदेशशान्त समस्त व्याधिव्यतिकराः पुरपायुपजी विव सकल संसार सुखभाजः प्रजाः। तथाहि-कुष्ठयोगो गान्धिकापणेषु स्फोटप्रवादो वैयाकरणेषु सन्निपातस्तालेषु ग्रहसंक्रान्तिज्योतिः शास्त्रेषु भूतविकारवाद साख्येषु क्षयस्तिथिषु गुल्मवृद्धिर्वनभूमिषु गलग्रहो मत्स्येषु गण्डकोत्थानं पर्वतवन भूमिषु शूलसम्बन्धश्चण्डिकायतनेषु दृश्यते न प्रजासु।' ( नलचम्पूतः )

कादम्बरीमाधृत्य लिखितासु गद्यकृतिषु धनपालस्य तिलकमञ्जरी' वादीभसिंहस्य गद्यचिन्तामणि', सोड्ढलस्य उदयसुन्दरी', वामनभट्टबाणस्य वेमभूपाल चरितम्', विश्वेश्वर पाण्डेयस्य 'मन्दारमञ्जरी' चोल्लेखमर्हति। एतासु कृतिषु रम्यमपितु गद्यं भीतिस्ता तु नार्थमभ्यञ्जयति। सुदीर्घां समस्त पदावली विरोधाभासश्लेषादलङ्कारवत्ता चात्र भूरिशः समुपलभ्यते, परं सर्वत्रैवैतद् गद्यं बाणभट्टादिना प्रभावितमवगम्यते। मन्दारमञ्जरीतो गृहीत एको गद्यांशोऽत्र समुदाह्रियते —

अथाऽग्रप्रसक्ततया वीररसोद्रेकेण च तादृशमतिक्रान्तमिव ज्ञानं च तदुपनिपातोद्भवनादद्भुतेन च त्वरिततरमादाय, शरासनं संधाय चाजिह्मगम- मोघं त्रिपुरवधोद्यतो भगवान् मृगाङ्कमौलिरिव सस्थानविशेषशालिना शरीरेण स्थित्वा, शिवावैलक्षण्येन रक्षन्निव कन्यकां दाशरथिरिव दशास्यं लक्ष्मण इव मेघनाद, नील इव प्रहस्त, हनुमानिवाक्षं शत्रुघ्न इव लवणं कर्ण इव घटोत्कच, भीम इव बकं तं राक्षसमपसदमवसानमनयत्।'

आधुनिकगद्यम्

आधुनिकगद्यस्य समारम्भोऽम्बिकादत्त व्यासरचितस्य शिवराज विजयस्य प्रणयनादङ्गीक्रियते। एषा कृतिर्वर्तमानशताब्द्याः प्रारम्भेऽरच्यत। नूतनोपन्यास- परम्पराप्यनयैव कृत्या प्रारब्धेति विषये विद्वांसः मतैक्यमेव दधति। शिववीरा- वरङ्गजीवादिनैहासिक पात्राण्याधृत्य विरचित एष उपन्यासोऽभिनव कथाशैली माविष्करोति। ऐतिहासिक-वृत्तेन सार्धं देशकालवर्णनमनेनाभिनवा कृतिमनीव रुचिकरां विधत्ते। शिववीरादीनां चरित्र चित्रणं त्वत्र सर्वथैव सजीवता व्यनक्ति।

"विषमा समस्या" "सदमुनिचिकित्सा" च, प्रेमाख्यायिकासु "एकवार दर्शनम्", भक्तिकथासु च "वालकभृत्य" सविशेषमुल्लेखनीया ।

सूर्यनारायणशास्त्रिणो दुर्लभदाम्पत्यम्" वृद्धिचन्द्रशास्त्रिण "उमा" रामेश्वरशास्त्रिण 'पतिव्रता', लक्ष्मणशास्त्रिणो यादृशी त्वं तादृशोऽहम्', शिवप्रसादशास्त्रिणश्च कूटसाक्षित्वफलम्" उल्लेखमर्हन्ति ।

एतासु कथासु व्यवहृता रचनाशैली किञ्चिदुदाह्रियतेऽत्र यथा—

अस्ताचलं चुचुम्बिषति भगवान् मरीचिमाली । कुलायाभिमुखमुड्डीयन्ते विहगा । भगवतो विश्वनाथस्य पुर्यां काशीनगर्यां राजमार्ग मव एव प्रायण गङ्गातटाभिमुखा विलोक्यन्ते । केचित् सन्ध्यामुपासितुम् अन्ये गङ्गातरङ्गसीकरणीतलसमीरमासेवितुम्, परे सुरसरिद्वीचिषु प्लवमानमिव शोणवर्णं भगवतो भुवनभास्करस्य प्रतिमामालोकयितुम्, इतरे परिश्रमक्लिन्ना स्नानेन शान्तिमवाप्तुम् बहवो विदुषां दर्शनेनात्मानं पावयितुम्, अनेके च संस्कृतालापप्रवहन्ती सुरसरस्वतीधारां श्रवणपुटेन पातुं प्रधावन्तो दरीदृश्यन्ते ।'

( पितुरुपदेश )

अन्यच्च —

"परिमितमधुरे प्रकाशे स्थिताया अस्य वस्त्रच्छटा साधारण्यपि हारिणीव समवृत्तासीत् । साधारणमूल्यमपि स्वच्छसुन्दरसूक्ष्मवसननिर्मितमधः परिधानीयम् । उपरि च हरिद्धरितवर्णसूक्ष्मसुन्दरमुत्तरीयवस्त्रं शान्तम् अग्रतोऽवलम्बितेन यनाम्या वदनं साम्प्रतमवगुण्ठितमभूत् । परं वस्त्रस्य सूक्ष्मतया तन्मध्यगतं तद्गात्रसुषमा स्फुटमभितः प्रसरन्तीवाऽऽसीत् । किशोर्या अस्या वयः सप्तदश वर्षेभ्यो नासीदधिकं । अनाग्वोज्जृम्भमाणनवयौवनमासलाऽस्या वक्षसि निविडनिबद्धा पाटलकौशेयकञ्चुलिका उत्तरीयवस्त्रान्तरितापि स्वाच्छद्ययोरतुङ्गताम-नश्वर घोषयन्त्यासीत् ।"

(शिष्या)

अन्यच्च —

"प्रियतम, भगवत्या गङ्गायास्तरङ्गा समाह्वयन्तीव मां स्नेहेन । ते तरङ्गा, यैः सर्वत पूर्वं त्वदीय सुकोमल स्पर्श प्रापितो मन्सविधे, ये ह्यावां प्रणयसूत्रे ह्यवध्नन्, येषां च सविधे क्रीडां कुर्वन्तो "को जानीते निभृतमुभयोरावयोः स्नेहसारम्" सवत्सरा व्यत्यगुर्नाय । किन्तु तद्दिनमद्यैव व्यतिगतमिति प्रतीयते ।

एतदनुप्राणितासु कथानिकासु पात्राणि प्रायशो दौर्बल्याऽनैतिकताऽनास्थादिभ्यो ग्रस्ता इव प्रदर्शिता। परं कथान्ते तान्येवाऽनुतापमयानि सजायन्ते मन स्थितावेतादृश परिवर्तनेनमादर्शं नैतिकता वा प्रति कामप्यास्था ससूचयन्ति। सुधारवादिताऽप्यनेन तथ्येन स्पष्टमेवाऽनुमीयते।

अतियथार्थवादोऽपि कतिपयासु कृतिषु निरूपितोऽस्ति। तत्र तु यथार्थस्य कटुतम जुगुप्सित वा रूप न केनापि विधिना प्रच्छाद्यते। एतादृशीसु रचनासु मानवमनसो गहनतलमुद्घाटयितु प्रयत्यते। अतस्तत्र प्रेय श्रेयो वा नैव विचारणीयम्। स्पष्टमेवैतादृशिवधमतियथार्थचित्रणमाङ्गलसाहित्यस्य संस्कृतेतर-भारतीयभाषाणा च प्रभावेणैव विधीयते। परिणामत एतादृशीना कृतीना सख्या परिमितैव विद्यते। तथाप्येतत्तु स्वीकरणीय यदाधुनिक संस्कृतलेखक स्वकीयपरिस्थितेर्वातावरणाच्च नैवाऽपरिचित। यथार्थस्यातियथार्थस्य वा चित्रणाय स बाध्यतामिवाऽनुभवति। पर संस्कारै प्रभावित एव लेखक समस्याया समाधान त्वादर्श एव गवेषयति।

आधुनिकासु गद्यरचनासु भाषाऽपि सारल्यमिव अगाम। परम्परिता सुदीर्घसमस्तपदावली प्रायशो न्यूनत्व गतवती। साम्प्रत तु भाषाया सौकर्य सक्षेपश्च समाविश्यते, यथा—

"चक्षुषी अमृदनाम्। अजम्भे। कक्षाद् वहिरायाम्।"

( कुसुमाष्टमी )

अन्यच्च—

"यस्य वस्त्राणि मलिनानि। शुष्क मुखम्। यष्टिहीनो हस्त भग्ने च पादत्राणे आस्ताम्।"

( साधु-समीक्षा )

अपि च—

"समीपस्थैव सरसी। स्वच्छ पय। मधुरो भ्रमरझङ्कार। पावन पवन। परम कुसुमसौरभम्। अरे। मम पदध्वनिना पलायितोऽय भ्रमर। महदपराद्ध मया।"

( मामकीन स्वप्न )

एभिरुदाहरणै स्पष्टमिद यदाधुनिको लेखक प्रायश सरलपदावलिमेव प्रयुङ्क्ते। सत्यमेवानेन सारल्येन संस्कृतगद्ये नाऽपि यतिभयनेवाऽऽधीयते। पर यदा कदा लेखकैरेतदप्याशङ्क्यते यद् दुरूहा समस्तपदावलि विना तदीय पाण्डित्य

न स्वीक्रियन्ते पाठकवृन्देन। अतस्तेन भग्ने मध्ये दुरूहा शब्दाः समस्ता च पदावली प्रयुज्यते सर्वो खल्वेतद् भाषायाः सरलीकरणमार्जवं च प्रतिपादयति। भाषाया माध्यमेन पाण्डित्यप्रदर्शनस्य प्रवृत्तिरपि सतत परिक्षीयते। आधुनिक लेखकस्तु साम्प्रतं नैज कथ्य सम्प्रेषयति। तच्च भाषाया आर्जवेन गतिमयत्वेन च सम्भाव्यते।

### जनसामान्यस्य चित्रणम्

समसामयिकं संस्कृतगद्यकाव्यं प्रायशः सर्वेषामेव वर्गाणां चित्रणमवाप्यते। वीरपूजा प्रत्युपेक्षा वृत्तिश्च बहुशो लक्ष्यते। आधुनिको गद्यलेखकस्तु सहस्राब्देभ्य उपेक्षितं वर्गमेव निरूपयितुमीहते। वर्गसंघर्षो मनुऽस्मिन् युगे पीडितवर्गस्याङ्कनं सर्वथैव समुचितमाभाति। निम्नवर्गस्य कृते लेखकीया सहानुभूतिस्तु पीयूषेव प्रतीयते। एतद् खलु परम्परितामुपेक्षामवमाननां चाऽभिध्वनति। परं रचनास्वेतस्य वर्गस्य समावेशेन तदीया दुरवस्था वेदना च प्राकाश्यं गच्छति।

### प्रस्तुत कथानिका-सङ्कलनम्

एतादृशि पृष्ठभूमौ राजस्थानस्य साम्प्रतिकानां कथा-लेखकानां कतिपया कृतयोऽस्मिन् सङ्कलने प्रस्तुतीक्रियन्ते। सीमितावधि कारणेन सङ्कलितकथानिकानां सङ्ख्या तु वर्धयितुं नाशक्यम्, परमेतासु कृतिषु।

किमपि प्रत्यग्रत्वं नवत्वं चाऽऽभालयितुं शक्यते। यथार्थचित्रणं तु प्रायः सर्वासु कथानिकासु वरीवर्ति। भाषाशैल्यां च वैविध्यस्य न कोऽप्यभावोऽस्ति। एकत्र तु प्रौढिमसमलङ्कृतं गद्यं दृष्टिपथमवतरति अपरत्र च लघुपदावल्या सज्जितं गतिमयं च सम्प्रेषणीयत्वं चाभिनवं रचनासामर्थ्यं प्रकटीकरोति। सर्वमेवोभय विधाप्येषा रचनाशैली सहृदयानां मनः प्रीणयितुं क्षमिष्यते इत्याशास्यते।

सङ्कलितानां कथानिकानां विषये न किमपि आवश्यकमपरिहार्यमिवास्ति। यतो ह्यनेन खलु कोऽपि पूर्वाग्रहो जनिष्यते इत्यनुमीयते। तथैव सङ्क्षेपं कथानिकानां कथ्यविषय एव पुरस्करणीयोऽस्ति। अयं च सर्वैः सुधीवरैः पाठकैः स्वयमवाऽववोधनीयम् विश्लेषणीयं च।

### (१) भ्रातृस्नेह

म. म. भास्करमहोदयैर्निखितायामस्यां कथानिकायामनुजं तु सपुमहोदरस्याऽमर्यादितमाचरणमग्रजं प्रति निष्ठुरं च प्रातिकूल्यं निरूपितम्। अपरत्र चानुज

सम्यैवाग्रजस्य नैसर्गिक स्नेह, विनिशा, कृतज्ञत्वमनहङ्कारश्चाऽभिव्यक्ते। यद्यग्रजस्तु वारम्वारमनुजं तिरस्कर्तुमेव प्रयतते, लोकाचारं परिभावयति, सुहृदादीनां परामर्शं च स्वोत्सिक्ततया न्यक्करोति। अग्रजस्तु सात्त्वयितुं प्रसादयितुं च भृशं चेष्टते। नैजमवमानं तु स पौनःपुन्येन निगिरति। अन्ते च नदीयः प्रयत्नः साफल्यं भजन्ते। अत्र खलु "यन्तो नैव परित्याज्य" इत्येतत् प्रतिपादितमस्यां रचनायाम्। अमुष्याः कृतभाषाशैलीनिदर्शनार्थमेकमुदाहरणं पुरस्क्रियतेऽत्र।

'शब्दानेतान्निशम्य तु सा सहसा वृश्चिका एव युगपद्दशन्नूनम्। अनुतापानलेन दन्दह्यमानदेहोऽहं लज्जयाऽवाङ्मुखोऽभवम्।

अन्वशोचमहं हन्त हन्त! कथमहं कृतं दुर्वियाकेन कस्य मां सुहृद समर्थनेन देवनिर्विशेषस्य समचनीयस्य ज्यायसो भ्रातुर्नवनवनीतमृदुलं हृदयं तुदन्नेतुदम्। अहं दुष्टोऽस्मि, महान् नीचोऽस्मि परमं पापीयाश्चास्मि। ममेदृशं दुर्व्यवहारं दर्शं दर्शं मन्येसुरलोके विराजमाना पितृचरणा अपि हन्त तपन्त्येव।"

उदाहरणेनानेन प्रौढित्वसयुक्तं समलङ्कृतं च भाषासौष्ठवं सहजतया प्रत्येतुं शक्यते। वाग्विचारयोश्च प्रवाहो न कुत्राप्यवरुध्यते। सत्यमेव

'सुखोदर्कं हि मर्षणम्"

(२) सापराधः

विद्याभूषणस्य श्रीगौरीशङ्करशर्मणोऽस्यां कृतौ यथार्थवादमाश्रित्य कोशध्यक्षस्थापकेन कृतश्छलनापहारं चित्रितोऽस्ति। सुप्रतिष्ठितो विपिनविहारी स्वाधिकृताद् वैरमस्थानाद् लक्षरूप्यकाण्यपहरति, तत्कृते च कारावासदण्डमपि भुङ्क्ते। परं दारैः सहोपजातो विश्वासघातः साफल्यमेव जगामेत्येतन्निरूपणं सापराधानां कृतेऽपि नैव तुष्टिदायकम्। वस्तुतस्तु कारागृहे सापराधस्य निवासविधिर्न केवलमपराधिवर्गं तर्जयति, अपि तु सर्वानेवापराधिनस्तादृशोऽपवादकार्याद् बहुशो वर्जयति। विपिनविहारिण एतद्व्याजकथनमप्यपराधिना कृते नयनोन्मीलनं विदधाति—

"श्रीमन्! कथमिवापश्यपयामि तानतान् दण्डभोग्यान दुर्दिवसान्। क्षणोऽपि च युगायते। स्वकुलप्रतिष्ठा, जीविकावृत्ति, सर्वमपि मे विनष्टम्। घोरेकलङ्कश्च मम शिरस्यापतितः। मम गृहिणी, बालकाश्च सर्वे जाता क्षुत्क्षामकण्ठाः करुणकरुणमवसीदन्ति। ("एवं वदन् स दीर्घमुष्णं च निःश्वस्य सकण्ठावरोधं सगद्गदं रदन् नेत्राभ्यां स्थूलस्थूलाः अविरला अश्रुधाराः प्रवाहयति।")

विपिन विहारिणोऽभिनयकौशलमेतत् सर्वथैव प्रशस्यतामर्हति । न तदीये कथने कोऽपि सत्यांश आसीत् । सम्प्रति तद्गृहेऽभावाना त्वस्तित्वमेव नाविद्यत । तस्य भार्या सन्ततिश्च न खल्वनाया क्षुत्क्षामकण्ठा वाऽऽसन् । धनापहरणमपि तेन विमर्श कृतमित्यपि विचारणीयम् । दायभागातिरिक्त स कोऽप्यवस्थापरोऽपि प्रभूत वेतनमपि प्राप्नोति स्म । एतादृक्स्थितौ न काऽप्यपरिहार्यताऽविद्यत धना पहरणाय । सेवानिवृत्तौ या विपुला राशिस्तेनाप्तव्या आसीत् साऽपि पदच्युतिकारणात् प्रध्वंस गता । प्रतिष्ठाहानिस्तु न कदाप्यपाकरणीया आसीत् ।

परमेतत् सर्वं विदुषा लेखकेन साऽभिज्ञानमुपेक्षितम् । तदीय कथ्य तु विपिनमृणाला कृतापराधाना माक्रन्दमेवोद्घोषयति । अत खलु मासत्रयोऽपि विपिनविहारी कारागारान्निर्मुक्त सन् स्वनन्दनादिवससमारोह मधुरजनीमिवोदा-पयितु प्रस्तौयेवम् –

'सर्वेऽपि नागरिका लोकास्तमिममुत्सवमुद्यापयितु स्वकीयामा इव गद्गरिका प्रवाहमनुसरन्तस्तन्मनस्कास्तद् गतप्राणश्वासोच्छ्वासास्तच्चेष्टास्तत्समर्पितसर्वमनो-वृत्तयस्तत्रैव जीवनमापत्य विन्दमाना मोमुद्यन्ते । आवातावत्स्वगृहमेवाधिवस तावद्य रात्रौ तमिम महोत्सवसमारोह सानन्द समुत्स च द्विरागमनसमय मधुरजनीमिवोदा पयाव यमुत्सव निमित्तीकृत्याह कारागारान्निर्मुक्तोऽत्र स्वामुपनयतोऽस्मि, मृणालिके ! बाले ! मुग्धे !"

सत्यमेवेद गद्य सुतरा प्रवाहमय सजीव च प्रतीयते । कथान्त यंनादृग् रसात्मकत्व विशेषत समुल्लसति । निश्चप्रचमनेन लेखकस्य गद्यरचनाप्रावीण्य भूरिशोऽभिव्यज्यते ।

(१) आत्मवेदना

डॉ० प्रभाकरशास्त्रिण कृतिरपा बहुसङ्ख्यकानामत्यजाना विपन्नत्व घनीभूता मनोवेदना च निरूपयति । उद्यमासक्ता अपि धोबलसदृशोऽन्त्यजा प्रतिवासर द्विवार भोजनमप्यवाप्नु न क्षमन्ते इत्येतदपि कथानिकायामस्या बहु चित्रितम् । विदुषा लेखकेन राधासदृशीनामन्त्यजकुमारिकाणा वैकल्यमपि समवलोकनीय पश्यन्नमत्र । स्वल्पानामपि वाचन प्रतिष्ठा भवतीति सवर्णैर्न खलु विस्मरणीयम् । स्वात्मजाया श्रीन रश्मिवृषभ इव धोबल स्थिरबुद्धिनता भेजे, इत्येतदत्र द्रष्टव्यम्—

'धृष्टेनम् ॥ भृश प्रकुपित पर नाऽक्षमत स प्रतिकर्तुम् । न श्वाम्यति

ग्रामणी क्षणमात्रमप्यन्तः । स तु राधामेव गर्हयिष्यति । तदनुसारं तु राधया एव तमारुष्टुं प्रवर्तितं भवेत्, प्रत्याख्यानं च कृते सति सर्वथा मर्यादिता स्यात् । तत्र ग्रामस्थापि ग्रामणी स्वात्मानं नैव गर्हयिष्यति । स खलु न स्वीकरोति यदन्य-जानामपि काचन प्रतिष्ठा भवति । स तु सर्वतोऽधोगच्छति यत् सज्जनानां सम्मान-पाऽऽस्पदा पावनतामापद्यते ।"

सपरिवारं ग्रामात् पलायितोऽपि धौम्यः स्वीयं ग्रामं प्रत्यावर्तितुं विलोकयितुं केऽप्यनाजानेनंस्तुभि । एवं खलु स न तु ग्रामे स्थातुं न च तत्र प्रस्थातुं शक्नोति । ग्रामे निवसता स तेन स्वप्रतिष्ठापि रक्षितुमशक्या । नेतः स ग्रामणी प्रतिकूलयति, तदा तु तस्य ग्रामगारगमनमपि मन्दिरगमनमिव जायेत । धौम्य-स्यैषा काऽप्यनाप्लाविता मनःस्थितिः प्रदर्श्यतामेति—

'किं कुर्याम वद साम्प्रतम् ?' स्वपरिवारमपृच्छत् धौम्यः । सन्दिनात् किञ्चिदेव हीनमासीत् तस्य वचनम् । नैराश्येन च पूर्णतः आक्रान्ताऽस्मीत्याकुलितस्व-दीया । न स्थातुं न च गन्तुं सज्जनपुरनरा किं कुर्युस्ते वराकाः । धौम्यश्चैव समुत्पीडितानास्तः परिश्रान्तिवशाद् भूमावेवाऽस्वपत् ।"

वस्तुतोऽस्या कथानिकाया नायको न केवलमसवर्णोऽपि तु सर्वथैव विपन्न प्रतीतिप्रश्न विद्यते । विरोधिसाम्मुख्यमपि स नैव विदधाति । पलायितुमना च स स्वकीयं पराभवमेवाऽङ्गी करोति । इत्थं तु कथानायकः एव नायिकोचितोचितं स्वस्थानात् पतितोऽस्यवमिवाप्नोति । परमाधुनिककथासु भूरिशः चित्रितं नायकत्वमेवात्र परिलक्ष्यते । अतः कथैषा कृतिनिर्मिश्रमेव साफल्यं भजते ।

(४) भाटकभवनम्

आचार्य विश्वनाथ मिश्रेण लिखितायामस्यां कथानिकायां हास्यरसस्य स्फुटत्वं महत्त्वमेवानुभूयते । विदुषा लेखकेन भाटकभवनस्य जीर्णत्वं शीर्णत्वं वा बहुधा प्रतिपन्नम् । कथामुखे एव भवनवर्णनं पाठकान् स्मितिमिव जनयति, यथा—

'प्रत्येकं ऋतौ परिवर्ततेऽस्य स्वरूपम् । वर्षर्तौ तु भवनमिदं तादृशं भवति जलक्लिन्नं येन पदे पदे स्खलनं पतनं च स्वाभाविकम् । शीतकाले तु क्लिन्नताजन्यशैत्याधिक्यात् प्रचुराच्छादके सत्यपि दन्तानां कटकटायमानताऽपा-कर्तुमशक्या । ग्रीष्मकालस्य तु वर्णनं नास्ति । महता यत्नेन क्व कथमिह विश्रम्यताम्, क्षणानन्तरं तु कथमिह वर्ततामिति सन्देहगोचरो विषयः ।"

वत्सनेऽत्र । युवावस्थोचित भावुकत्वं तु समग्रतो भ्राजतेऽस्यां कथानिकायाम् । नवत्वेन सरसत्वेन चालङ्कृतैषा रचना कामपि प्रशस्यतामर्हति ।

## (६) स्मारकम्

हिन्दीसंस्कृतयोर्विशिष्ट कथाकारस्याचार्यचन्द्रमौलेरेषा कृतिरस्पृश्यता-निवारणसमस्यां पुरः स्थापयति । स्वतन्त्रताप्राप्तेरद्यावधि समस्येयं समाधानं नोऽर्जति । अस्यां दिशि कथाकारस्येयं रचना सर्वथा प्रत्नेव विभाति । अनया कथया लेखकस्य राष्ट्रियदृष्टिकोणस्य पर्याप्तपरिचयो मिलति ।

कथातत्त्वदृष्ट्यापीयं कथा समालोच्या वर्तते । अस्याः कथानकं न केवलं सामाजिकमपि तु सामयिकमप्यपि । प्रारम्भात् आसमाप्ति अस्य सामयिकत्वस्य सम्यग् निर्वाहोऽपि विहितः । सर्वाण्यपि पात्राणि स्वस्वचरितस्य प्रतिनिधिभूतानि सन्ति । यत्र कृष्णदत्तः प्रतारणपरायणोऽस्ति, तत्रैव मेघसिंहः सत्यनिष्ठकार्यकर्तृरूपे निर्दिष्टोऽस्ति । दयारामस्योत्समानमन्यत्र दुर्लभम् । मन्यमत्र सर्वेषां चरित्रचित्रणं साधुसम्पन्नम् ।

कथोपकथनस्यापि सम्यग् निर्वाहो विलोक्यते । वातावरणनिर्माणे कथायां वर्तते किमप्यसाधारणं वैशिष्ट्यम् । ग्राम्यवातावरणचर्चातिरिक्तं विशेषाधिवेशनस्य देशकालनिर्वाहः साधु प्रतीयते । शैलीविषये नो किमपि बहु वक्तव्यमपेक्ष्यते । कथाकारस्य हृदयग्राहिणी वैदर्भी शैली कथानकं परिणतिं नयमाना दरीदृश्यते । उद्देश्यविषयस्तु स्पष्ट एव । सामाजिकास्पृश्यतासमस्यायाः समाधानमेवात्र विराजते प्रधानं लक्ष्यम् । बलिदानमन्तरेण किमपि कार्यं नो सम्पद्यते, इति तु तथ्यमेवास्ति । अस्पृश्यहरिजनानां कृते सवर्णं कूपं वद्गाटितं, किन्तु बलिदानानन्तरमेव, न पूर्वमिति मोद्देश्यमेव कथेति साधिकारं वक्तुं पार्यते । भाषासौष्ठवकृते दयारामस्य भावद्दीन सजनिता प्रतिनिर्योदाहियतेऽत्र—

"सहसाऽन्तरिक्षं चकम्पे । मन्ये मेदिनी चचाल । दयारामस्य निवेदनं व्यर्थं जातम् । धर्मध्वजिनः प्रलयं कर्तुं कटिबद्धाः । कृष्णचन्द्रस्य मौनं सङ्केतमाप्य तज्जनता निर्दयं प्रहर्तुं तत्परा जाता । अनवरतो यष्टिप्रहारो ननर्त । नृशंसतायाः नग्नताण्डवं प्रवृत्तम् । एकत्र हिंसा परत्राहिंसा । एकत्राश्रुः परत्र स्निग्धहस्तता । अस्ति कीदृशं वैरीत्यम् । पशुतामेव तामसोवृत्तिरास्था । सर्वे परस्परं रुधिरस्य पिपासवो जाताः । मिथो हस्ताहस्ति, दण्डादण्डि, केशाकेशि, कुन्ताकुन्ति प्रहरणं प्रवृत्तम् ।"

## (७) दिग्भ्रमः

श्रीकलानाथशास्त्रिणा लिखितैषा कथानिका विश्वविद्यालयेषु प्रवर्तमान

होराद्वये पूर्वाभ्यासैर्व्यतियापिते को वा दोषः समापतित ? सर्वमिममन्तर्द्वन्द्वं निरन्तरमन्वभवदसौ ।"

संक्षेपतोऽस्या रचनायामनुभूतेः प्रामाणिकता, सम्प्रेषणीयता चाभाव्यितु शक्यते ।

(८) मूल्यानमूल्यानि

डॉ० (श्रीमती) शशिगुप्ता अस्याः कथायाः लेखिकाऽस्ति । अस्यामपि कथानिकायां छात्र-छात्रादीनां कथानकं संगृहीतम् । युवकयुवतीनां हासपरिहासादारभ्य हेमायाः विशृङ्खलितमिवाचरणमत्र चित्रीयते । विजयस्तु तदाचरणं तद्वचनानि च सर्वथैव विस्मरति । स स्वकीये कक्षे समस्तां रात्रिं तया सह यापयति । मात्रा च निर्भर्त्सितोऽयं युवा हेमामुद्वोढुमुपकल्पते परं न केवलं हेमाया पिता, अपि तु स्वयं हेमा तमुपहसति । प्रेयस्यैव प्रवञ्चितः स मातुः समीपमागत्य क्षमां याचते ।

इत्थं लघ्व्याः कथायाः यौवनोचित उत्साहातिरेकः संवर्णितः । नैतिकतायाः स्वरूपे च परिवर्तनमाधुनिके युगे समागतं तदपि कथानिकायामत्र प्रत्यक्षीक्रियते । काश्चन सम्पन्नाः युवतयस्तथाविधाचरणाय पितृभिरप्यनुज्ञाप्यन्ते, इत्यत्र विस्मयमिवावभाति । परमेतत् सर्वं युगसत्यमाभाति । प्रवञ्चनमेतादृशं न तु युवकेन न युवतिभिः करणीयमित्येव सन्दिश्यतेऽनया रचनया ।

भाषाशैलीमुदाहर्तुमेष एवांशो द्रष्टव्यः —

"सन्ध्याकाले विजयस्य सुहृद आगन्तुमारेभिरे । पञ्चसु तेष्वेका युवतिरप्यविद्यत । हेमेत्यभिधानमासीत् तस्याः । नैसर्गिकं तदीयं सौन्दर्यम् । वेशभूषा चातीव रम्या । युगानुकूलं तस्याः नेपथ्यं बलादाकर्षति स्म युवकान् । तैः परिवृता सा मुक्तभावेन स्मितान्यकिरत् । यदि कोऽपि तस्याः हस्तं धर्तुं प्रयतते, तदा सा नैव लपते । परं केनापि व्याजेन हस्तं तु शीघ्रमेव प्रत्याजहार सा । स्पष्टतः तदीयोपस्थित्या स्मिताः सर्वे एव युवकाः हृष्यन्ति स्म ।"

स्पष्टमेव किमपि नवत्वं धत्ते कथानिकेयम् ।

(९) स्वीकृता

डॉ० नन्दकिशोर गौतमेन लिखितायामस्यां कथायां यौतुकसमस्या वर्णितास्ति । राधाया विवाहो यौतुकाभावेन सम्पन्नतां न याति । मध्येविवाहं परित्यक्ता

च सा दाम्पत्यधर्मं स्वीचकार। परं गृहस्वामिनः क्रूरदृष्टिपातलक्ष्य सा तदपि परित्यक्तवती। ततश्च स्मृतिकार्यं तया आरब्धम् किन्तु तत्परित्यागायापि सा दुष्टयुवकैर्विवशीकृता। एवं सातेन सतप्ता सा गृहान्निर्गत्य रेलयान्या प्रथमश्रेणिकक्षमुपातिष्ठत्। यात्राप्रमाणपत्राभावे निरीक्षकेण प्रताडिता सा रोदितुमारेभे। ततश्च तत्रैवासीनेनापरिचितेनैकेन युवकेन तस्याः कृते प्रमाणपत्रं क्रीतम्। युवकस्तु स राधायाः पतिरेवासीत्, येन सा मध्येविवाहं परित्यक्तासीत्। ततस्तु सर्वथैवानाथापि सा पुनरपि सनाथाऽजायत।

एवमस्याः कथायाः यौतुकाभावेन प्रपीडितायाः युवत्याः अरुन्तुदं जीवनं चित्रितम्। अस्याः भाषा-शैली त्वतिसुगमा प्रतीयते।

(१०) राष्ट्रनिर्माता

डॉ० ईश्वरानन्दशर्मणा लिखितैषा कथा कामपि सुषमां विशेषतां धारयते। अन्तर्द्वन्द्वात्मिकायामस्यां कृतौ देशनिर्मातृणां शिक्षकाणां दुर्दशाऽभिवर्णितास्ति। आजीवनं समाजदेशादिनिर्माणे तिलशः आत्माहुतिं विदधाना अपि शिक्षकाः सेवानिवृत्तिं समवाप्य कीदृशीं कारुणिकस्थितिं प्राप्नुवन्ति इति तत्र वैशद्येन प्रकटीकृतम्। जनार्दनो यदा सेवानिवृत्तो भवति, तदा तत्समीपे नासीत् कोऽपि सुरक्षितो धननिधिः। लघीयानपि तदीयः परिवारः सर्वथाऽभावमेवाऽनुबभूव। एवं खलु जनार्दनस्य जीवनसन्ध्यायां दयनीया दशा सर्वाविषादिनीवासीत्।

एतत्कथानकमाममाप्ति गतिमदवलोक्यते। वातावरणनिर्माणे तु कथाकारस्य सिद्धहस्ततैव प्रत्यक्षीभवति। एवं खल्वेषा कथा सोद्देश्या सूक्ष्मेक्षिकया च ग्रथिता विभाति।

साम्प्रतं कथा शैल्या एकमुदाहरणमत्र प्रस्तुतीक्रियते—

"गगनं अवेक्ष्य दिवं पश्यन् जनार्दनो दीर्घं निश्श्वासं तत्याज। स्वकीयाधिकदशया स भृशं विषण्णे। सोऽचिन्तयत्—समाजः जीवनपर्यन्तं सेवमानस्य मम कृते किमकरोत्। मम राष्ट्रनिर्मातुर्दीयमानं पदमुपहासास्पदमिव प्रतिभाति। मम शिष्याः सर्वक्षेत्रेषु कर्मसंपृक्ता वर्तन्ते। परं तैरपि किमहं कदाचित् सच्यानः? पुरस्कारकृते वक्तव्यप्राप्तवेतनं शनमात्रमुपकल्पितमेवाहम्? समाजस्य दृष्टौ मदीयं मूल्यमेतावदेव।"

आशास्यते यदनया कथया राष्ट्रनिर्मातृणामध्यापकानां दयनीयां दशामपाकर्तुं प्रयतिष्यते।

## (११) द्वौ शास्त्रिणौ

डॉ० मनोहरशर्मणा लिखितायामस्यां कथायां द्वयोः सहपाठिनोः दीर्घकालान्तरं पारस्परिकं सम्मिलनं चित्रीकृतम्। तयोरेकस्तु ज्ञानशास्त्री, द्वितीयश्च पाकशास्त्रीति नाम्नाऽऽकार्यते स्म समतोनेऽध्ययनकाले। साम्प्रतमपि भानुः पाकक्रियानिरतः सन् स्वनाम सार्थकं चकार। ज्ञानचन्द्रस्त्वर्जनाभावे ज्ञानशास्त्र्येवातिष्ठत्। ततस्तु भानुना स्वमित्राय ज्ञानशास्त्रिणे कस्यापि श्रेष्ठिनो गृहे पूजकपदमुपकल्पितम् एवं स मित्रधर्मं निर्वहन् ज्ञानशास्त्रिणः कष्टान् झटिति दूरीचकार।

अत्र खलु ज्ञानस्य तुलनायां कर्मणो महत्त्वं प्रतिपादितम्। शास्त्रिणा स्वयमपि स्वीक्रियते यत्—

"भ्रातः! तव पाकशास्त्रैव मां पण्डितमकरोत्, अन्यथा मम विद्या व्यर्थैव स्यात्।"

नैराश्येनाभिभूतस्य पण्डितस्येयमात्मस्वीकृतिरद्यतनस्य कृतिसाहित्यस्य सुप्रभावं व्यनक्ति। अधुना न जाने कतिसंख्यका उच्चशिक्षोपेता युवकयुवतयो वृत्त्यभावे तादृशेनैव नैराश्येनाभिभूताः सन्ति।

सत्यमेवेयं रचना सत्यभावस्य कटुतमं रूपमभिव्यनक्ति।

## (१२) मग्नत्रिकोण.

श्रीमेवाराम कटारा' महाशयेन कृतिरेषा त्रिकोणं प्रस्तुतीकरोति। दीपकस्य प्रथमा पत्नी ज्योतीतिनाम्ना प्रथिताऽऽसीत्। सा रूपवती सुशिक्षिता चाऽविद्यत, किन्तु विवाहस्य दशवर्षानन्तरमपि सा सन्ततिं न लेभे। अनेन हेतुना तदीया श्वश्रूः रुष्टा समजायत। तया वारंवारं प्रेरितो दीपको ज्योतिमपरित्यज्याऽमितानाम्नीं द्वितीयां पत्नीमानिनाय स्वगृहम्। अमिताऽपि बहुकालं यावन्न कामपि सन्ततिमाप। अत्रान्तरे ज्योतिं प्रति दीपकस्य स्नेहो न्यूनत्वं न जगाम। एतदालक्ष्य पितृसम्पन्नतया गर्विता साऽमिता दीपकं परित्याज। दीपकेनापि तत्पितुः कार्यालयात् त्यागपत्रं प्रदत्तम्। परं यदा स गृहं प्रत्यावर्तत, तदैव तेन ज्ञातं यज्ज्योतिस्तु गृहे शान्तिमानेतुं ततो गतासीत्। परं तया स्वपत्रे एतदपि सङ्केतितं यत् सा गर्भवती आसीत्। तत्र खलु दीपक उभाभ्यामपि पत्नीभ्यां विरहितः सन् बालकान् पाठयितुमारेभे। ज्योतेः स्मृतिस्तु तं नैवाऽत्यजत्।

एकदा स कस्मिंश्चिन्निर्जने स्थले अमितां ददर्श, प्रत्यभिज्ञातवान् च ताम्।

परममितया तु स नाऽभिज्ञात । तया निवेदित यत्तस्तितुरसोमालयस्य भवनतया नाऽपि श्रमिको भूत । ततस्तु अमितया सह तज्जनको तत्र पलायित । तदनन्तर दीपकस्त्वमिता स्वमित्रगृहमानिनाय । मित्र त्वा रक्षाधीशक आसीत् । स च ज्योतेरेव भ्राता । ज्योतिरपि सपुत्रा तत्रैवाऽविशत । एतद् दृष्ट्वा अमिता भृशमतपत । स्वमपराधमाचिन्त्य सा रोदितुमारभत । ततस्तु त्रिकोणस्य तिस्र रेखा पुनर्मिलन गता । न लग्न तस्मिंस्त्रिकोणमगमे प्रयाग इवाभीत् ।

इत्थमेषा कथानिका सन्तत्यभावेन जनित विरोध प्रस्तुतीकरोति । न केवल भारतेऽपि तु सर्वस्मिन्नेव जगति स्त्रिया वन्ध्यात्व विवाहोच्छेदाय कल्पते । द्वितीयोऽपि विवाहो यदा कदा सन्ततिप्रदानसामर्थ्यं भजते । एतदेव कथायामस्या मुपकल्पितम् । प्रथमा भार्यां प्रति दीपकस्य दृढ स्नेहोऽपि भूरिश आख्यात । अमिताया मात्सर्यमपि प्राचुर्येण निरूपितम् । तदीय पत्र तु दर्पोक्तेर्निदर्शनमेवास्ति ।

नास्ति बहु कथनीयमस्या शैलीमधिकृत्य । स्पष्टमेवेय वैनाप्यार्जवेन सयुक्तेवाभाति ।

(११) सत्यस्यान्वेषणम्

कुमारी प्रभा खत्री अस्या कथाया लेखिकाऽस्ति । अस्या कथानिकाया सत्यस्याऽन्वेषणाय कृता प्रयोगा विशदतया प्रस्तुतीकृता ।

विज्ञानस्याध्येता विशाल' सत्यमन्वेष्टु प्रायतत, पर तस्य सुहृत् प्रकाश-स्तमेव निरर्थकमिव मार्गं त्यक्तु मदैवोपदिशति स्म । विशालस्य सद्दिक्ष्याऽहर्निशमपि च दृष्ट्वा प्रकाशेनैक प्रयोगाश्रितोऽपि न । तस्मिन्न विशालस्य सहयोगोऽप्यपेक्षितस्तेन ।

ततस्तु मित्रे ते ब्राह्मण-वैद्य ज्योतिषाचार्य-पीरादीन् समुपगते । उदर-पीडाया शमन च सर्वत्र प्रार्थित विशालेन । ब्राह्मणादिभिश्च पीडाया चिकित्सा भिन्नतया प्रतिपादिता । तैराकृत निदानमपि बहु रोचकमासीत् ।

सर्वमेतत् प्रकाशयित्वा प्रकाशेन निष्कर्ष एष प्रस्तुतीकृतो यत् सत्य स्वानुभूतरेव विषयोऽस्ति । तदन्वेषण च स्वात्मन्याश्रय विनैव स्वाभ्यन्तरे एव करणीयम् । एतत् सश्रुत्य विशालोऽपि प्रत्ययमाप । प्रसन्नमुद्रया स निजगाद यत् मार्गोऽपि निश्चेतैव प्रयासेन मन्मर्मान्विष्यति ।

इत्थ मन्वेषा कथानिका सत्यान्वेषणसदृश कथानकमाश्रयते । स्वय

लेखिकाऽपि स्वीकरोत्येतत् तथ्यं यत् सृष्टेः सर्वे प्राणिनोऽनन्तकालतः सत्यस्यान्वेषणाय प्रयतन्ते, परं न केनाप्यस्यां दिशि साफल्यमवाप्तम् ।

परं प्रकाशेनोद्घोषितो निष्कर्षः सशक्ततां धत्ते । निश्चप्रचं स्वयं त्वनुभूतेरेव विषयोऽस्ति । न तत् खल्विन्द्रियगम्यम् । तस्य स्वरूपमपि न खलु निश्चितम् । सतत्त्वमस्तित्वस्य पर्याय एव । वैज्ञानिकैः प्रयोगैः सत्यमन्वेष्टुं नैव शक्यते । एतदन्वेषणे तु स्वान्तःकरणं एव विधेयम् । एतद्दृष्ट्या कथालेखिकाया निष्कर्षः सर्वथैव प्रशस्यः ।

कथाशैली सर्वथैवाधुनिकी । भाषायाः सारल्यं गतिमयत्वं चोल्लेखमर्हति ।

समाहृतिः —

एतस्मिन् कथासङ्कलने त्रयोदश कथानिकाः सङ्कलिताः । आसां लेखकलेखिकाः शैल्यादिदृष्ट्या किमपि वैलक्षण्यमिव निदर्शयन्ति । तत् खलु न केवलं व्यक्तिभिन्नताऽऽधारितमपि तु युगवैभिन्न्याधारितम् । अत एव शब्दचयने पदविन्यासे च कोऽपि विशेषो दृष्टिपथमायाति । एतत् सर्वं कथारसस्य चर्वणाया न खलु बाधकम् । सर्वा एवैताः कथानिकाः विमर्शमितत्वं प्रत्यग्रत्वं च पुरस्कुर्वन्ति, सहृदयमनांसि चाकृष्टुं सर्वथैव क्षमन्ते, इत्याशास्यते सम्पादकेनाऽनेन । आशास्यते यदिदं सङ्कलनं राजस्थानीयलेखकानां कथासु पाठकानां विशेषामभिरुचिमाधास्यति ।

डॉ० पुष्कर शर्मा

# भ्रातृ स्नेहः

नवलकिशोर काङ्कर

वय चत्वारो भ्रातर तिस्रो भगिन्य पितरौ च। पञ्चवर्षेभ्य पूर्वमस्मासु ज्येष्ठो भ्राता तयाऽत्र पाणिगृहीत्याऽपि मयोजितो। मम पत्न्या अङ्क तु पुत्ररत्न मध्येशमदेवयत्। एतावानेवास्माक परिवार आसीत्। पितृचरणा परम प्रख्यातिजुषो विदितवैदुष्या विद्वास समवर्तिषत। जातौ, समाजे, विद्वत्क्षेत्रे चामीषा महान् सम्मान प्रासरीसरीत्

मम ज्येष्ठभ्रातुर्जन्मकाल एव प्रसवपीडया सतीलोक प्रस्थितवत्या प्रसविन्या यथासमय पितृपादा पुनरागतदारा सञ्जाता। वय त्रयो भ्रातरो भगिन्यश्चास्या एव गृहीतजन्मान स्म। अस्मन्माता नातिशिक्षिता भूत्वाऽपि गेहव्यवस्थासञ्चालने विचित्र वैदुष्य वहति स्म। परमसौ प्रकृत्या परमकोपनाऽप्यवर्तत। मदीय पूर्ण नाम पूर्णचन्द्र आसीत् किन्तु स्नेहातिरेकेण सर्वे मा "पूर्ण पूर्ण" इत्येव कीर्तयन्ति स्म।

विद्या-वैभवमेव सर्व-श्रेयस्कर मन्वाना श्रीपितृचरणा अविगणय्यात्मन आर्थिकी परिस्थिति दूरे चापास्य निखिल लौकिक सौख्य रात्रिन्दिव परिश्रम्य तनयांस्तनयाश्च पाठयामासु । ज्यायान् भ्राता मे सुरभारत्या नदीष्णतामवाप्य प्रथम श्रेण्यामाचार्योपाधिञ्च गृहीत्वा पाश्चात्याना वाच्यपि एम ए परीक्षामुत्तीर्यैकस्मिन् महाविद्यालये प्राध्यापकपद प्राप्तवान्। भगिनीषु प्रथमा बी ए—प्रथमवर्षे, द्वितीया दशमवर्गे तृतीया चाष्टमश्रेण्यापठन्ती समवर्तिष्ट। अनुजो साम्प्रत षोडशमश्ववर्षेनावेवास्तात्। अह तु विज्ञानविषये विशेषमतिमादधानो द्वितीयश्रेण्याम् 'एम एस सी' इत्युपाधिनाऽऽत्मानमलङ्कृत्यापि सेवावृत्तिमलभमान सवयोभि सहैतस्ततो भ्रमणे प्रवृत्त।

मम ज्यायान् भ्राता यावान् शान्त, सरल, मधुर, सुशील विनम्र सदाचरणपरायणश्चासीत् अह तावानेवोग्र, प्रकोपप्रकृतिक, दुःशीलोऽनुशासनशून्यश्चा-

गताऽवर्त्तन। भाग्यादहमपि निखिलं दिनं परिभ्रम्य दिवसावसानेऽस्तमाकुलाये शकुन्त इव तत्र गृहं समागच्छम्। मां वीक्ष्य किमपि वक्तुकामाः पितृपादाः सर्वथाऽसमर्था अपि पूर्वार्द्धेन शयनादुत्तिष्ठन्तो मध्य एवाधोमुखीभूय निपतिताः। पतनेन महता च तेषां कण्ठस्वरमार्गो महता वेगेनावरुद्धः। रोगवेगातिशायितामसहमाना अमी पुनरपारादशचैतन्यं परित्यजन्त इव लोचने मनाङ् निमील्य मूर्च्छाभिभूता भूताः। एतेषामनया दशयाऽनवशनमाक्रम्य धमद्धमद्धमनी-धावमान-शोणितस्य ममापि तदानीमपच्छन्न इवाङ्गानि अनश्यत इव मर्मस्थानानि अच्छिद्यन्त इव च निखिलानि देहबन्धनानि। स्थितिमेतामालोक्य शिशवोऽपि च रोदसी रोदयन्त इवोच्चैः प्रलपितुमारभन्त। एवंविधे व्यतिकरे मातरमङ्गमुच्चैराह्वय यन मां रश्मिबद्धेव वायुना समानीतेव च तत्र झटिति समुपस्थिता तदीयां दशां दृष्ट्वा च किमप्यनर्थजातं चिन्तयन्ती सोच्छ्वासमश्रूणि विमुञ्चन्ती सुभृशं त्रस्यन्ती च सा माध्वम परवशाऽभूत्। अहं तु तेषां मनोभावमवगम्य तत्पार्श्वे कृतापराध इवाधोमुख उपाविशम्। तदानीं तेषां नयनयोरश्रुबिन्दुप आसन्। वक्तुकामा अपि कण्ठावरोधेन स्पष्टं कथयितुमसमर्थाः शनैः शनैरव्यक्तया गिरा मामवमबोधयत—

"वत्स पूर्ण! साम्प्रतं मे नेदिष्ठ एवाम्यन्तसमयः। सर्वैर्भ्रातृभिरच्छेद्येन स्नेहेन वर्त्तितव्यम्, न स्वल्पोऽपि विवादो विधेयः। मा कार्षीः कदापि मातुर्भ्रातुर्वाऽवहेलनम्। ज्येष्ठभ्रातरमेवेदानीं सर्वे मत्स्थानेऽवगच्छन्तु। अयं साधुस्वभावः सर्वेषामेव च हितैषी वर्त्तते। अतो नायमुपेक्षणीयः कदापि। सम्प्रति भगिनीनां विवाहभारोऽपि युष्माकं शिरस्येव समापतितः। नेमाः पितृविहीना भूत्वा शोचनीया स्युरित्यपर्थेयम्। युष्मन्माता सर्वशस्वभावाऽपि न कदाचन केनचन तिरस्करणीया। नेयं वराकी वार्धक्ये प्रतिपनमनन्यमानसा मां संस्मरन्ती रोदं रोदं जीवनं यापयेद्' इति। वक्तुकामानामपि तेषां नातोऽधिकं वचः प्रासरत्। श्रुत्वेदं स्नेहसिक्तं पितृचरणानामन्तिममुपदेशं दुःखावेगमवरुन्धतोऽपि ज्येष्ठभ्रातुर्नयनयोः सहसा श्रावण एव समायातः, अहमपि पितृपादानां पुत्रवात्सल्येन द्रवीभूतो जातः। अविरलमश्रूणि पातयन्ती नातिदविष्ठं पतिवियोगमवगच्छन्ती विलपन्ती माताऽपि मे सर्वाङ्गैकादात्मस्वभावं धिक्कुर्वती, सखेदं निःश्वसन्ती नितान्तमनुतपन्ती माध्वेऽङ्क भर्त्तुश्चरणौ संस्पृशन्ती, स्वकीयेनोत्तरीयाञ्चलेन च तान् वीजयन्ती परिव्यथितहृदया तेषां पादाब्जयोरपतत्। हन्त हन्त!! अस्मिन्नेव क्षणे पूज्याः पितृपादा एकवारं करुणापूर्णदृष्ट्याऽस्मानवलोक्य चिररात्राय दीर्घनिद्रायामस्वपन्। हाहाकारश्च सर्वत्र प्रावर्तत।

पितृचरणानां द्वादशाहक्रिया पि यावन्न सञ्जाताऽसीद् गृहे कलहारोपण

प्रारभत। सत्यं सत्यमहमेवास्य हेतुरासम्। गृहं पैतृकीं सम्पत्तिं लक्ष्यीकृत्य मयैवैष कलहवात्या समुत्थापिता। यतो मह्यं ज्येष्ठभ्रातुः शासनं नारोचत, सहैव तत्सुखमवासमपि नाहमभ्यनन्दम्। जीवत्सु तातपादेषु तु मया भ्रातुः सर्वमनुशासनमसह्यत, न कदापि स्पष्टरूपेण तद्विरोधोऽक्रियत। परमधुना विज्ञानविषये द्वितीयश्रेण्यामाचार्यतामुपगतस्य स्वतन्त्रप्रकृतिकस्य मे भ्रातृशासनऽवस्थानं क्व सम्भवमासीत्? अतोऽहं पितुरन्तिममप्युपदेशं कूपे निक्षिप्य स्वां प्रकृतिमन्वसरम्।

मया निरचीयत, मम वयस्यैरपि तथैवाभ्यस्तं यत् पितुरनन्तरमपि यद्यहं भ्रात्रा सह निवत्स्यामि तर्हि स मरणपर्यन्तं मम स्वातन्त्र्यावरणं रोत्स्यति। अतो न मया कदापि गाम्भीर्येण भ्रात्रा सह वासो विधेय — इति। अत एव मया दृढनिश्चयपूर्वकमपरस्मिन्नेव दिने ज्येष्ठभ्राता सूचितो यद्दिनत्रयावधानं भवान् आनन्दपूर्वकं सर्वैः सह मन्त्रणां विधाय यथाभागं पैतृकसम्पत्तेर्विभाजनं विदधातु, अन्यथा विवशेन मया न्यायालयस्याश्रयो ग्रहीष्यते। तच्छ्रवणसमकालमेव भ्रातृवर्यश्चकितचकित इवाभ्रूयत्। तत्पादतलात् भूमिः स्खलितेव प्रतीयते, न च तन्मुखात् किमपि वचो न्यसरत्। तन्मौनमावमन्यता सम्भाव्य मया पुनः स्पष्टं कथितम्— 'कथं भवता मौनमवलम्ब्यते? न मह्यं भवादृशैः सह साम्प्रतमेकस्मिन्नपि दिने स्थानं रोचते, अतो गृहं एव यथाभागं सम्पद्विभाजने भवता श्रेयः, अन्यथा न्यायालयस्तु वर्तत एवेति' साहसं सञ्चित्य भ्रात्रोदितम्— 'पूर्णं! पूज्यपादानां द्वादशाह-श्राद्धसमाप्तौ त्वत्कथनानुसारं कस्मिंश्चिदपि दिवसे सर्वमिदं त्वदनुकूलमेव वयं सर्वं सम्पादयिष्याम। किञ्चिद् विचारय लोकाः किं कथयिष्यन्ति साम्प्रतम्?

मयोक्तम् नाहं लोकेभ्यो बिभेमि न च मम पार्श्वे तथा वार्तां श्रोतुं समयः यन्मया निगदितं तदक्षरशः सत्यमवगच्छतु भवान् नाहं द्विवारं कथनं जानामि" इति। नास्य भ्रात्रा किमप्युत्तरितम्। अधोमुख इत्ता स बहिः प्रकोष्ठेऽगच्छत् न च पुनर्विषयस्यास्य कापि चर्चा गृहे तेन प्रचारिता।

दिनत्रयं प्रतीक्ष्य मयाऽऽत्मनिश्चयानुसारं न्यायालये विभाजनाभियोग प्रास्तूयत, सूचितश्च गृहजनः। इदमवगत्य तु विस्मारितशिशुजनो गो स्वकण्ठेन तनमा मामवेक्षमाणं एतदेवशोचन्— "वत्सपूर्णं! नैतत्तव कुलोचितं कर्म। किं पितृचरणानामन्तिममप्युपदेशं सम्प्रत्येव व्यस्मरः? का शीघ्रताऽभूदिदानीमेव? अस्तु यादृशी तवेच्छा।"

अम्मत्तातपादाना प्राणै: सह मातु प्रकृते. शौर्यमपि न जाने सहसैव कुत्र विलीनम्। मर्तु वामा सा यद्देकस्मिन् गृहकोणे दु मह पतिशोक-ज्वालाभिर्ज्वलन्ती, अविरतमश्रूणि पातयन्ती चावतिष्ठत। न खादन, न वा पान तस्यै किमप्यरोचत। अभूतपूर्वेव तस्या स्थितिरदृश्यत। का कथा पुनरस्या गृहस्थितिनिरीक्षणस्य तु। किन्तु ज्येष्ठभ्रातुरनुजेनामावपि ग्राममवाबोजत परमहं तामपि स्पष्टमवादिष "यज्ज्येष्ठभ्रातृमहोदया दिनत्रयपूर्वमेव मया सूचिता परन्तु ते तु मा बालिशमेवावगच्छन्ति, न किमपि मम कथने ध्यान ददति। विवशेनैव मया न्यायालय प्रार्थित "— इति। गुर्वेतद् भृश दूयमाना मातामन्मुखदर्शनेऽपि पापमाकलयन्तीव चेलाञ्चलेन स्वमुखमाच्छाद्यास्थीत। भ्रातृवर्योऽपि ततो न किमप्यवकथत्।

द्वितीयस्मिन् दिने मदीयो मातुल समागत्य मामवादीत्— "अपि त्व गृहविभाजन वाञ्छसि ? मयाऽऽकर्णित यत्त्व न्यायालयेऽप्यभियोग कृतवानसि" इति। यथाऽह पूर्वं भ्रातर मातरञ्चोक्तवांस्तथैव मातुलमपि स्पष्टमवोच यन्न मया साम्प्रत भ्रात्रा सह स्थातु शक्यते।

*मातुलो भूयोऽपि प्रेम्णा मा पर्यपृच्छत्— पूर्ण ! तव ज्येष्ठो भ्राता तु* देवतुल्यो विद्यते, सुशील शान्तप्रकृतिकश्च दृश्यते। कथ पुनस्त्व त परित्यक्षसि ?

मयोक्तम्, इयमस्ति मे मानसी वाञ्छा, मदीयमनोवाञ्छायाञ्चापरेषा हस्तक्षेपस्य कोऽस्त्यधिकार ?

आत्मीयत्व प्रदर्शयता विपश्चिता मातुलेन पुन कथितम्— "वत्स पूर्ण ! अवधेहि, अवधेहि। त्वदीया पितृपादा अस्मदावृत्ता समाजे नियमतो लब्धसम्माना अवर्तन्त। कि तवानेन कृत्येन तेषा कीर्तिचन्द्रिका मलिना न भविष्यति ? कि सुमनसा पुराजुषा तेषामात्मा ग्लानि नोपैष्यति ? सर्वत्र तव महती निन्दा भविष्यति, सर्वे च त्वामपवदिष्यन्ते। अत साम्प्रतमत्रासन त्यजेद कर्म।"

"नास्ति ममात्र चिन्ता" इति कथयन्नह ततश्चलित। मातुलोऽपि पराजित इव नि श्वसन् स्वगृहानगच्छत।

एव न जाने मम पार्श्वे कियन्त सम्बन्धिन समायाता प्रतिगताश्च, परमह न स्वपथो विचलितोऽभव पदमपि। अह तु तस्मिन्नेव दिने मम पत्नीमुपरि प्रासादपृष्ठे भिन्नप्रकोष्ठे स्वनन्त्रमेव भोजन सम्पादयितुमादिशम्। सा तु यद्दो

कालादेतदेव प्रतीक्षमाणाऽऽसीत् । मया तत्कालमेव तत्सर्वमङ्गीक्रियत । रात्रौ यदा छात्रैः सर्वमावर्णितं तदा स तत्क्षणमवोपरि समागत्य तामेव पुराणीमात्मन उपदेश साहस्री श्रावयितुमुपाविशत् ।

न तत्र मह्यं भ्रातुरागमनमरोचत । क्रुध्यन्नहं तमवोचम्— "नाहमिदानीं भवता सह कस्याञ्चिदप्यवस्थायां स्थातुं शक्नोमि । यदा च महावस्थानमेव न तदा सहभोजनं तु बहुदूरम् । अतो न भवता कदापि पुनर्मदुपदेशदानाय यतव्यम् ।"

अपमानभारमिमं शिरसि वहन् भ्राता येन पथाऽऽगतस्तेनैव प्रतियातः । द्वादशाहनियात्त न काचन विशेषघटना घटिता । कस्मिन् कश्चिल्लोकः प्रवदितु समवेता लोका अवकाशमेनस्य विषयस्यापि चर्चां वितन्वन्ति स्म । परं मम विचारेष्वोपदपि परिवर्तनं नायातम् । पत्न्या अनुरोधेन नाहं पुनः कस्यापि किमपि श्रावोचम् । भ्रातृवर्योऽपि भूयो न मां किमप्यवादीत् ।

पितृपादानां द्वादशाहश्राद्ध-भोजनादि-क्रियाकर्माणि सर्वाणि समाप्तानि । सान्त्वयितुमागन्तुकानां तादृशः समवायोऽपि नावर्तत । वराकी जननी अदातुरा प्रतिपलं पुविश्रुपं पातयन्ती सर्वेषामस्माकमनुरोधेनैकमर्धं रोदनकवलं भुञ्जाना स्वजीवनञ्च धिक्कुर्वती कथमपि कालयापनं विदधत्यासीत् । पितृहीना शिशवोऽपि मातुर्दशां लोकं लोकं रुदन्तः इवातिष्ठन् । एवं सर्वं एव गृहप्राणिनः उपरते पितरि महता कष्टेनैव जीवन्ति स्म ।

अस्तु । न मया न्यायालयादभियोगपत्राणि प्रत्यानीतानि । शीघ्रमेव च विभाजनं मदनुकूलं जातमेव । न तत्र ज्येष्ठभ्रात्रा स्वल्पोऽपि प्रतिरोधोऽक्रियत । यदा वयं न्यायालयाद् बहिरागतास्तदा भ्रातृवर्यो मे समीपं समागत्य मत्स्कन्धे च स्वहस्तं निधाय स्निग्धया गिरा मामवोचत् 'पूर्णं स्वदिच्छानुसारं विभाजनं तु जातमेव परमावां सहोदरौ स्वः न कश्चन विच्छेदः समागच्छेदिति सर्वदा सर्वथा चावधेयम्' इति नाहं भ्रातरं किमप्युत्तरं गेहञ्च समागमम् ।

विभाजनानुसारं नीचैस्तनो विशालो भवनभागो ममाधीनतायाम्, उपरितनश्च ज्येष्ठभ्रातुः पार्श्वे समायात, मध्यवर्तिनि गृहभागे च माता एवं पुत्रतुल्याभिः सह निवासं व्यदधात् । न्यायालयात् प्रत्यावर्त्य मध्यमेऽह्नि भ्रातृदेवेन भोजनं न गृहीतं, न वा केनचन गृहजनेन वार्तैव विहिता । प्रजावत्या भृशं प्रार्थ्यमानः स केवलं स्वल्पं जलं निपीयास्वपीत् ।

सायं यदाऽसौ स्वरमवदया भोजनं कर्तुमुपाविशत्तदा स एकाकी भोक्तु-मशक्नुवान् पत्नीमवोचत्— "नीचैर्गच्छ, शिशून् पुत्रांश्च समानय, तेऽत्रैव मया सह भोक्ष्यन्ति, तदनन्तरं जननी त्वया सह खादिष्यति । एतान् विना मम गलप्रदेशा-देकोऽपि कवलो नीचैर्न विसरति ।" तयोक्तम्, यद्यैवं तु तेन न्यायालये स्वेच्छानुसारं गृहादिविभाजनं कारितम् अद्यैव च भवांस्तस्मिन्नीदृशं स्नेहं प्रकटयति । अमन्ये खलु द्वयोरपि स्नेहं सवाम । भ्रात्रोक्तं भद्रे ! इयन्तमनेहसं मया महोधितयाऽपि त्वं मत्प्रकृतिं नाज्ञासीः । मातादज्ञाननो वा यत्नेन विहितं न तस्यायमर्थो यत् सोऽस्मत्स्नेहभावादपि वञ्चितो भवेत । तद् गच्छ गच्छ त्वं शब्दापय, कथय च तं त्वद्भ्राता समाह्वयति भोजनाय । भूयस्तया निवेदितं नाहं तु तदाह्वानं स्वल्पमपि लाभं सम्भावयामि वदामि च न स मम वचनमेति । भ्रात्रा मानोऽपि पुनराजल्पितं मां मामुच्चैराह्वयत ।

तस्मिन् दिनेऽस्माकं पाकशालायां ज्येष्ठ भ्रातुः सज्जयितुमुद्यथयितुञ्च मिष्टान्नव्यञ्जनानि सम्पादितान्यासन् वाढमाहृता माताऽपि तत्रैव स्थिता विद्यते । अहञ्च भ्रातृपत्न्या आह्वानमेव श्रुत्वा झटिति स्थाल्या नमनानि गृहीत्वा भोक्तुं सलग्नो मम जननीत्थोक्तवान्— कथय स स्थितानी भोजनं कुर्वन्नस्तीति ।

मया विचारितं भ्रातृजनमसौ मां वञ्चयितुमाह्वयति अथवा विभाजनानन्तर-मप्यय मां स्वाधिकार एव रक्षितुं चेष्टते । अन्यथा कोऽयमवसरो मगाकारणस्य ? न यास्यामि न यास्यामि कदापि अहमधुना तेन सार्धं नैव स्थास्यामि ।

भ्राता यदा जननीवचनं कर्णे कृतवांस्तदा तत्क्षणमेव स भोजनामना-दुत्थाय प्रजावतीमब्रवीत्— नाहमिदानीमिह भोजनं करिष्ये । त्वमत्र तिष्ठ, अयमहमागच्छाम्येव झटिति । शृत्वेदं मा विस्मयमादधाना किमपि नोक्तवती, भ्राता च मत्वरमस्माकं सदनम् समुपेत्य मत्पत्नीं सम्बोध्य सस्नेहं प्रोक्तवान्— "स्नुषे ! अहमधुनात्रैव भोक्ष्यामि ।"

अहं तु ज्येष्ठभ्रातुः सहजस्नेहपूर्णं पीयूषाञ्चितं वात्सल्यसवलितञ्चेदं वचो निशम्य भूमिमवेक्षमाणो वाचंयमो मिष्टान्न-भक्षणे दत्तचित्तमिवात्मानं प्रदर्शयन्न-तिष्ठम् । शरीरिणी मनोव्यथेव जनन्यपि विस्मयमावहन्ती न किमप्युक्तवती ।

मदीया जाया यदैकस्यामन्यस्यां स्थाल्यां मिष्टान्न-व्यञ्जनानि सज्जयितु-मारब्धा तदा भ्रात्रोक्तम्— "तिष्ठ तिष्ठ, पूर्वं पूर्ण एव भोजनं करोतु, एतद-नन्तरमहं भोक्ष्ये ।"

# सापराधः

गणेशराम शर्मा

## ( १ )

अस्ति विपिनविहारी नाम वणिग्वैद्यसंस्थानस्य कोशाध्यक्षस्थाने। महाप्रभावान्महाजनत्वाच्च तत्रत्यजनेषु सुप्रतिष्ठितो मन्यते। तस्य परिवारो विस्तृतो महान् वटवृक्ष इव शाखाप्रशाखासमन्वितो वर्तते। तत्र पितामहः पितामही, मातामहो, मातामही, मातापितरौ, मातुलो, मातुलानी मातुलपुत्रा पितृव्यौ भ्रातरो, भगिन्यः सर्वेऽपि च सुशिक्षिता दीक्षिता विद्वांसः। प्रायस्सर्वेऽपि चास्य कुटुम्बस्य सदस्याः पुमांसो लब्धप्रतिष्ठाश्च राजकीयसेवासु नियुक्ताः सन्ति। अधिकांशास्तु महापदान्यधितिष्ठन्तः प्रोच्चैः स्तरीया वरिष्ठाश्चाधिकारिणो वर्तन्ते। परिवारस्यास्य वधवः कन्यकाश्चान्याऽपि सर्वाः सुशीलाः सुशिक्षिताः व्यवहारकुशला गम्भीरस्वभावाः स्मितपूर्वं मधुरकोमलभाषणाश्च विद्यन्ते। संयुक्तोऽसौ परिवारो जनप्रियोऽस्ति। राज्यकार्येषु सामाजिकेषु प्रसङ्गेषु धार्मिकोत्सवेषु, सभासमितिसम्मेलनेषु, दिनचर्यासु च तासु तासु सदा सर्वदा तत्परतया सर्वानुकूलं व्यवहरणात् सदाचारादिगुणैः सर्वजनसहायकत्वाच्च सर्वेऽपि नागरिका जनाः, सामाजिकाः सभ्याः शासनाधिकारिणश्चैनं सन्तुष्टाः सुप्रसन्नाः हितैषिणश्च विद्यन्ते। अभिजनवता महति कुले समुत्पन्नास्त एते हिन्दुत्वाभिमानिनो वणिजः स्वकर्तव्यनिरताः सद्गुणगणविशिष्टाः लौकिकेषु धर्मकलापेषु परमचातुर्येण व्यवहरन्तो मोमुद्यमानाः सन्ति। कुटुम्बेऽस्य विचारस्वातन्त्र्यं व्यवहारस्वातन्त्र्यं स्वाधीनता, व्यक्तिगता सर्वतन्त्रस्वतन्त्रता न विलोप्य तेषां जीवनयात्राप्रणाली च विशिष्टगुणा वीक्ष्य लोकास्तमेनं कुटुम्बमेकमादर्शरूपमिव मन्यन्ते, समाद्रियन्ते च। अत्र परिवारे कश्चनार्यसमाजस्य सदस्यतां परिपालयति, कश्चिदन्यः सनातनवर्णाश्रमधर्मानुयायी, परः शाक्तशैवादिनिष्ठोऽन्यतमो वैष्णवो भक्तिमर्यादामनुसरति, कश्चन योगिजनभक्तोऽन्यतरो विज्ञानवादी, कश्चिद् गोभक्तोऽन्यो व्यापारव्यवसायनिपुणः, परो नास्तिकशिरोमणिः सर्वथा भौतिकवादी, कश्चनामिषभोजी, कश्चित्स्वल्पाहारः, कश्चन क्रीडारसिकः शिक्षकश्च वर्तते। सर्वेऽपि चैते

च। राज्यसेवकानां स्थितिरपि क्षणस्थायिन्यनिश्चिताऽविश्वसनीयं वास्ति पुनर्मन्येते द्वे पुत्र्यावपि सद्यो विवाहयोग्ये स्तः। अत्र कर्मण्यपि च बहुधनमपेक्ष्यते नाम नूनम्। अन्ये कुलीना सुशिक्षिता दीक्षिता सदाचारिणो वराः प्रभूतयौतुकदानेन विना नोपलभ्यन्ते। अस्याहि विषमायां लोकस्थितौ मम गृहाश्रमस्थितिः प्रभूतधनं विना कथमिव कुशलिनी निरापत् स्यादार्तिकाले? अहह! महती हि विडम्बनेयम्!! विशेषतो मादृशां मध्यमश्रेणिकानां स्वल्पवित्तानां राज्यसेवामात्राश्रयिणाम्!!! पत्नीयमम मृणालिनी मान्या सुशिक्षिता सौम्यस्वभावापि च पूर्वोक्त्या सवशारोस्ते सम्भारे पूर्वतने प्रयोजिता मुक्तहस्त धनमाश्रयेति। स्थानान्तरमपि चेतो मम सम्माश्रन. यथा महत्कारिणो मेजिजारिणो मुखाच्छ्रवंव कर्णानपि क्वचित् माम्। अथपुनर्गृहमध्येषु नित्यमेव हि कर्मजातापु नस्वबस्थस्तेष्वेपु गवाक्षिक्य महार्घ्यवगाडितुष रजमुगादपि चाधिक्यमेधमानमारते। वस्तुतस्तदेतत् सर्वं पश्यतो मेगार्हस्थ्यपरिस्थितिस्तावद्बहिर्मन्ये शोभनेव परिदृश्यमाणापि चान्तत परिक्षीयमाणा दुर्बलैवमे प्रतिभाति। अहो! कथमिवाह तमेतं दुर्वहं कर्तव्यभारमनिवार्यमुद्वोढुमपि समर्थः स्याम्? कुलप्रतिष्ठा कुटुम्बप्रतिपत्ति, सुविस्तृताञ्जागतिकान् व्यवहारान् बत कथमहं परित्रास्येयम्? तन्मया किं कर्तव्यमिदानीम्? केनोपायेन, केन विधिना, किं कृत्वा चाधुना जीवितव्यं भो। हा, हन्त! भविष्यममान्धकाराच्छन्नमिवैव दृश्यते!!!'

एवमन्तर्व्यथान्दह्यमानहृदयस्य विपिनविहारिणो जीवनसमयो व्यतीयमानाऽभूत्। अथैकदा रात्रौ मृणालिनी विपिनविहारिणं सुखमुपविष्टं पप्रच्छ—कथमिव भवान् सचिन्तः सशोक इवालक्ष्यते? दिने दिने भवत्स्वास्थ्यमपहीयमानमिव परिपश्यामि, प्राणनाथ! भवन्मुखेऽपि च सा नैसर्गिकी सौम्यता, प्रसन्नता स्वभावमाधुरी, स उत्साहः, सा शान्तिः कान्तिः श्रीश्चेदानीं ननु क्वापगताः? विवर्णं, विच्छायं, निस्तेजो, म्लानमिव मुखमालोक्य भवतस्तदतन्मया पृष्टम्। यदिनातिगूढं रहस्यं भवेत्तदा निर्भयमुच्यताम्।

सोऽब्रूत—'प्रिये! मृणालिनि!! साध्वि!!! नास्त्येव किमप्यन्याहितं मादृशम्। परन्तु'

मृणालिनी—'परन्तु किम्? प्राणवल्लभ! निर्विशङ्कमुच्यताम्, यद्भवन्मनसि विद्यते चिन्ताकारणम्।'

यद्यपि गम्भीरहृदयो विपिनविहारी तद्दिने तु मृणालिन्या मुहुर्मुहुः पृष्टोऽपि न स्वाशङ्कां गार्हस्थ्यसम्बन्धिनीं नोक्तवान्, परमन्ततोगच्छत्सु दिनेष्वेकदा रहसि

धैर्यं धत्स्व ! वज्रनिष्ठुरं विधेहि स्वहृदयम् ! कार्ष्णायसनिर्मितमिव स्वकीयं भौतिकविग्रहं परिभावयस्व ! अये ! देवि ! मृणालिके ! त्वं तु पुनरधुना-तन्या दुःसाहसवत्यादस्युदलशिरोमणेः पुत्तलिकायाश्चेष्टितमपि सुदृढं रहस्यरो-मान्च गोपितम् याहमपूर्णं चरितं सम्वादपत्रेषु पठितं सर्वमाद्यन्तपर्यन्तम् जानासि ! तदिदानीमात्मनोऽबलाभावं सर्वथापहाय त्वया चण्डीरूपमाचरणीयम् ! आगमय हि ते योग्यतायाः, परिपक्वानुभवप्रौढेः, सर्वं शिक्षायाः, विवेकस्य, चातुर्यस्य, कर्म-कौशलस्य धैर्यगुणस्य च परीक्षासमयोऽवितर्कितसम्भवोऽस्माऽऽपतितः ! सुदृढीया-नस्ति मेऽविचलो हि विश्वासो यत्त्वमत्र परीक्षायामवश्यमेव प्रथमश्रेण्यामसंशयेनान्ते-नोत्तीर्णा भविष्यसीति । सावधाना भव ! समभ्यावात्मचेतनाम् ! किमिव हि दुष्करमत्र संसारे मानवानाम् सुदृढसंकल्पानामधुनातनयुगीनानामिदानीन्तनेऽस्मिन् गुणशासने प्रतिस्पर्धनवादिन्यराजके सर्वथा स्वतन्त्रे युगे ? विशेषतस्तु त्वादृशीनां सचेतसां नारीणाम् ! अवधत्स्व ! सत्यं मे विश्वासं सर्वात्मना कुरुष्व !'

एवं वचनशतैर्हितोपदेशैस्तैस्तैश्च प्रभावोत्पादकैः सुचिरं प्रबोध्य स्वपत्नीं, विपिनविहारी निशीथोत्तरं स्वकक्षं गत्वा सुष्वाप, परन्तु रात्रिभर निद्रां नो लेभे ।

(४)

अथ सप्ताहाभ्यन्तरे नगरेऽस्मिन् प्रवादोऽसौ प्रससार यद्धि राजकीये बैङ्कसंस्थाने पेनसिल्वक्षरस्थरमुद्राप्राय धनं चौर्येणापहृतमिति । 'मुण्डे मुण्डे मति-र्भिन्ना तुण्डे तुण्डे सरस्वतीति' नगरे तथा वाणी श्रूयमाणास्ते यद्यपि दुर्घटनाया अस्या विषये प्रत्यक्षं नकोऽपि किमपि श्रुते, तथापि गृहकुट्यान्तर्यत्र तत्र सर्वत्र प्रच्छन्नभावेन महान् हि कलकलो वर्ण्यमानो वर्तते । लोका विषयमिममधिकृत्य नानावाद-विवादान्,तर्कवितर्कान् मोहापोहं युक्तीरनुमानानि च कुर्वाणा दरीदृश्यन्ते । मण्डलाधीश आरक्षिविभागाध्यक्षादयोऽन्येऽपि च न्यायालयाधीशप्रभृतयोऽनेके वरिष्ठाधिकारिणोऽस्य सर्वं तद्धनापहारकं चौरमभियुक्तमन्वेष्टुं सयत्ना सन्तीति जनरवो महान् सर्वत्र व्यानेने । एतदपि च श्रुतं यद्बैङ्कस्थानस्यैतस्य सर्वेऽपि कर्मचारिणोऽस्य चौर्यकर्मसन्देहे निगृहीता वर्तन्ते इति । केचिन्नागरिकाः कथयन्ति, 'बैङ्ककर्मचारिणामेवान्यतमस्य कस्यचिदेतस्य हस्तकौशलचिकीर्षितमेतद्भवितुमर्हति ।' अन्येषां केषाञ्चिदभिप्रायोऽनुश्रूयते, 'युगेऽस्मिन् धनलोलुपानां मानसी दुष्प्रवृत्तिर्मति-निगूढा कोनु खलु वेत्तु प्रभवति ? परन्तु वराकस्य कुलीनस्य विपिनविहारिणः शिरसि सहसैव विपत्तिनिष्ठुरोल्कापातोऽसमाजस्मादापपात ।' अपरे कथयन्ति,— 'मैवं ब्रूत ! विपिन' प्राणात्ययेऽपि नैव कदापि तथाकर्तुमपचेष्टेत ! यत सहि

सदाचारवतां सुशिक्षितानां शीलविनयदयादाक्षिण्यवतां प्रतिष्ठितानां श्रेष्ठानाम् नागरिकाणां श्रेष्ठिवर्याणां सुपुत्रो वर्तते ।' केचिदवधारयन्ति 'वस्तुतस्त इमे नगरवासिनो बैङ्कसंस्थानस्य कर्मचारिण एवापराधिनो भवेयुर्यतस्तेषामेव सविधे कोषधनं सदैव सन्तिष्ठते ।' इत्थं नानाविधा धारणा नगरवासिनामधिकारिणां सर्वसाधारणानां च हृदि बद्धमूलाः सन्ति । सत्यमसत्यं केनापहृतं धनमनर्जितं याथातथ्येन न कोऽपीदमपि वक्तुं पारयन्नासीत् । यद्वा तद्वास्तु परन्त्वन्यैर्बैङ्ककर्मचारिभिः साकमेव विपिनविहारी चाप्यभियुक्तत्वेन सन्देहे निगडित इति कोलाहलो व्याप्तवान् ।

अथ प्रारम्भिकान्वेषणानुसन्धानादनन्तरं सर्वेऽप्येतेऽभियुक्ता विधिविधाननियमानुसारमावश्यकत्वेनाभियोगस्थापनपुरस्सरं न्यायालयस्य निर्णयार्थं प्राहीयन्त । आरक्षिविभागाध्यक्षेण न्यायानुसन्धानाय रहस्योद्घाटनाय चाप्यभियोगे ते ते सर्वेऽपि चाभ्युपाया प्रयत्नाश्च विहिता यैर्वास्तविकश्चौरो निर्णीयेत । अनेकेषां साक्षिणां, कर्मचारिणामधिकारिणां, सर्वकारपक्षस्य वाक्कीलानामभियुक्तानां च वक्तव्यानि न्यायाधीशेन यथायथं लिपिबद्धान्यक्रियन्त । अभियुक्तानां, तत्सम्बन्धिनां सुहृन्मित्राणां, कौटुम्बिकानां बन्धुबान्धवपरिचितानां गृहेष्वपि चान्वेषणानुसन्धानं समभ्यधीयत । निभृतं गुप्तचरा नियोजिताः । नात्र प्रसङ्गे कोऽपि चाभ्युपायः प्रयत्नो वाऽत्राशिष्यत । परन्तु सफलतया न किमपि रहस्योद्घाटनं बभूव । राज्यशासनविषयेऽत्र बहु पुरुषार्थो विहितः । अधिकारिणो भर्त्सिता धर्षितास्तिरस्कृताश्च । केषाञ्चित् पदोन्नतयोऽवरुद्धाः, केषाञ्चन पदावनतयः कृताः, कतिचन निलम्बिताः, केचन स्थानान्तरिताश्च पुरस्कारोऽपि भूयो भूयो घोषितः परन्तु चौरकर्मणोऽस्य रहस्यं चिरायानुद्घाटितमेव यथापूर्वं तस्थौ । अन्ते पक्षद्वयानन्तरं स्वोत्तरदायित्वपरिपालने प्रमादात्स्यानवधानापराधे विपिनविहारी तथा द्वावन्यौ तत्सहकर्मिणौ कनिष्ठाधिकारिणौ न्यायाधीशेन दोषभाजोऽपराधिनो चावाप्य वर्षत्रयभोग्येन कठिनकारावासदण्डेन दण्डिताः । तदनन्तरं त्रयोऽप्यपराधिनो बन्दित्वेन स्वदण्डं भुञ्जाना वर्तन्तेऽधुना । मासद्वयानन्तरं वरिष्ठन्यायालये पुनः प्रार्थनां कृत्वा स्वाभियोगस्य पुनर्निरीक्षणं कारयित्वा तौ द्वावपि अधिकारिणौ निर्दोषौ घोषयित्वा निर्मुक्तौ सह राज्यसेवायामन्तर्गृहीतौ स्वनियोगस्य पूर्वपदयोर्नियुक्तिमाप्तवन्तौ । विपिनविहारी दण्डं भुङ्क्ते ।

( ५ )

तदिदं राजकीयं कारागारमासीत् । सर्वेऽपि बन्दिनो नित्यं नियमानुसारं प्रातःकालीनं शौचस्नानदन्तधावनादिकं दिनचर्याक्रमं निर्वर्त्य स्वस्वकर्मसु नि-

केषु मनागपि दयां दृश्यन्ते। केचन वन्दिनः कारागारस्य तस्याभ्यन्तरोद्याने वृक्षलतागुल्म-पादपानामालवालेषु जलमिञ्चन्ति। केचिज्जलप्रवाहप्रणालीं परिष्कुर्वन्ति। अपरे कारागारस्य कर्मशालायाः कक्षान् सम्मार्जयन्ति। केचनोद्यानवीथीरुभयतो मार्ग-परिष्करणाय तृणदूर्वादीनि कृन्तन्ति। अन्ये वृक्षमूलेषु मृत्तिकया साकं खाद्यं व्यामिश्रयन्ति। परे कक्षेषु हस्ताभ्यां वस्त्राणि वयन्ति। केचित् कम्बला-न्यूर्णासनानि, दर्भासनानि च निर्मान्ति। अन्ये जलकुण्डसमीपे वस्त्राणि प्रक्षालयन्ति केचन मुद्रणालयप्रकोष्ठे पुस्तकानि मुद्रयन्ति पुस्तकबन्धनानि च साधयन्ति। केचन कर्मचारिणो वन्दिनामेतेषां कार्यकलापानां निरीक्षणं कुर्वाणाः सन्ति। प्रहरिणश्च यत्रतत्र शस्त्रहस्ता इतस्ततः सावधानमटन्तः सूक्ष्मेक्षिकया स्वनियोगं परिपालयन्ति।

तत्रैव कारागारान्तःप्राङ्गणे वर्तमाने सुविशाले खलु भवनेऽध्यक्षस्यैकः कार्यालयप्रकोष्ठोऽस्ति। तस्मिन् मध्यभागे सर्वोच्चे काष्ठमञ्चेऽध्यक्षमहोदयो निषण्णो वर्तते। तत्पार्श्वयोर्द्वयोः सम्मुखे चाङ्के कर्मचारिणो लेखकाष्ठङ्कणकर्मकरा रोकाध्यक्षादयः पत्रसहतीनां मध्ये स्वकार्याणि सम्पादयन्तो विद्यन्ते। अत्रैव कार्यालयस्यास्मिन् प्रकोष्ठस्यैकस्मिन् कोणे काष्ठफलकस्य सम्मुखमवाङ्मुखमासीनः किमपि लेखनकार्यं कुर्वाणो बन्दी स्टूलसञ्ज्ञकमेकं काष्ठासनमधिष्ठितो विपिनविहारी चापि वर्तते। स खल्वन्येषां कर्मचारिणामपेक्षया मनाङ्मलिनवेश-प्रवृद्धश्मश्रुकूर्चो विवर्णदीनमलिनमुखमण्डलो मौनमास्थितः काश्चन् कर्गदसहतीर्गृ-हीत्वा कारागृहाध्यक्षस्य हस्ताक्षराणि कारयितुम् विनम्रभावेन प्रतीक्षमाणोऽध्यक्षस्य मञ्चाग्रे समुपतिष्ठते। क्षणानन्तरं तं तत्रोपस्थितमालोक्याध्यक्षोऽब्रवीत्—

अध्यक्ष — 'आम्, विपिन! आयाहि, समिद्धानि तानि कर्गदानि? अपि त्वमधुना मे हस्ताक्षराणि तेषु कृतानि कामयसे??'

विपिन — 'श्रीमन् भवदाज्ञानुसारं साधितानि सर्वाणि सेवकेन मया। भवद्धस्ता-क्षराण्येव केवलमवशिष्यन्ते।'

अध्यक्ष — 'आनय तावत्तान्यतिप्रयोजनीयान्यावश्यकानि च त्वरितप्रेषणीयानि खलु वर्तन्ते। श्वो वा परश्वो वा मन्त्रिमहोदयस्यागमनमप्यत्र सम्भाव्यते।'

विपिन — 'महोदय! कोऽसौ माननीयो मन्त्रिप्रवरः?'

अध्यक्ष — 'अये! किं न जानीषे त्वम्? त एते सन्ति गुप्तमहोदयाः!'

विपिनविहारी किलाश्रुपूर्णाभ्यां नेत्राभ्यां तमध्यक्षं निरीक्षमाणः स्तब्धो।

सहयात्रिणोऽभवन्। मण्डलाधीशेनान्यैश्च वरिष्ठाधिकारिभिः कारागृहाध्यक्षेण च, सहस्तधूननं मन्त्रिणः स्वागतविधिः सोपचारं साडम्बरं चोपपादयद्भिः माल्यार्पण-मकारि। मण्डपाधो मुख्यमञ्चे सुखमुपविष्टे मन्त्रिमहोदये, सर्वजनसमुदाये च कारागृहाध्यक्षो मुद्रिताक्षरं स्वागतभाषणमपाठीत्। ततो मन्त्रिणापि पूर्वनिर्दिष्टम् संक्षिप्तमभिभाषणमकारि। तदनु मन्त्रिप्रवरोऽध्यक्षेणैव नीयो बन्दिगृहं निरीक्षमाण वशात् बहु ददर्श। व्यवस्थां सर्वां वीक्ष्य मन्त्रिणा सन्तोषभावः प्रकटीकृतः तत्र कारागारस्य गत्वा मन्त्रिमहोदयस्तत्र व्यवस्थां प्रबन्धं, कार्यपद्धतिं सञ्चालनक्र-मादिकं सर्वमद्राक्षीत्। मन्त्रिसचिवेन निरीक्षण- विवरणं विलिख्य संरक्षितम्। तत्र कारागारे भविष्यति सुधारोन्नतिविषयकाः केचन प्रस्तावा मन्त्रिणा लिखित-रूपाश्च। अध्यक्षेण मन्त्रिमहोदयस्य पुरतः स्थापिताः। अन्ते च बन्दिनः सर्वे प्रत्येकं मन्त्रिमहोदयेन दृष्टाः तेषां सुखदुःखादिकं च पृच्छता मन्त्रिणा तदपराध-विषयेऽपि किमपि पृष्टम्। भविष्यति तद्धृदयपरिवर्तनस्य कृते, सदाचरणाय च बन्दिनः सोपदेशं प्रबोधिताः। एवं कुर्वता तेषां विपिनविहारिणि क्रमप्राप्ते वारे समागते तमुद्दिश्य मन्त्रिमहोदयेन कारागृहाध्यक्षः पृष्टः— 'कोऽसौ? कश्चास्या-पराधः? को दण्डः?'

अध्यक्षः — श्रीमन्! विपिनविहारीति नामासौ बन्दी। वैदूर्यधनापहरणकाण्डे स्वनियोगे प्रमादाचरण, स्वोत्तरदायित्वेऽसावधानमस्यापराधः। वर्षत्रय भोग्यश्चास्य कठिनकारावासदण्डः। दण्डं भुञ्जानोऽयमावत्सरार्धमस्य समयं व्यतीतवान्।

मन्त्री — 'अरे! किन्नामासि त्वम्? ( विपिनमुद्दिश्य )

विपिन — 'विपिनविहारी, महोदय!'

मन्त्री— 'कस्यात्मजः त्वमसि? किं चास्ते पितुर्नाम?'

विपिन — श्रीमन्! गगनविहारी मम पितामहोऽवधविहारी च मे पिता।'

मन्त्री — 'क्वास्ते पिताधुनावर्तते? पितामहश्च किं कुरुते?'

विपिन — 'मातापितरौ मे तीर्थाटनयात्रागतौ स्तः। पितामहश्च ममगार्हस्थ्यादिरतो हरिद्वारमधिवसति।'

विपिन — 'किमर्थं त्वया वैदूर्यधनमपहृतम्?'

विपिन — स्वामिन्! नाहमपहृतवान् धनम्। न जाने केनापहृतं तत्? प्रमादात्

स्वोत्तरदायित्वादपस्खलनादनवधानदोषापराधादेव तमिमं दण्डमहमलभे ।'
( अश्रुपूर्णलोचनोऽवाङ्मुख पश्यति )

मन्त्री — 'अपि त्वमसि निर्दोषः ?'

विपिन — 'सर्वथा निर्दोषोऽस्मि प्रभो ! हन्तभाग्यमेव मे मामपराधिनं प्रामाणयत् । वैंकसम्स्थानस्य धनमरक्षणो मम प्रमाद एवापराध ।'

मन्त्री — 'अवश्यमेव मोक्तव्यो दण्डोऽयं ते प्रमादज । अस्तु, भविष्यति नैव कदापि प्रमाद !'

इत्यक्रमेणावशिष्टान बन्दिनोऽन्यान्यानपि चैवमेव किमपि किमपि पृच्छन् मन्त्रिमहोदय पुनर्मण्डपमागत्योपविष्ट । सचायचषकपान स्वल्पाहार फलादिमहितमुपभुज्य ततो राजकीयमतिथिभवन जगाम ।

( ७ )

अथ रात्रौ सम्माननीयमन्त्रिमहोदयस्य स्वागत सत्कारार्थं मण्डलाधीशेन विराट् प्रीतिभोजोऽप्यायोजित । तत्र भोजे बहवोऽधिकारिण कांग्रेसीया नेतारो गण्या मान्या — प्रतिष्ठिता नागरिका विद्वांस प्राध्यापका कवय कलाकारा धनिकाश्चामन्त्रिता सन्ति । यथा समय समागते मन्त्रिमहोदये समारोहस्यास्य कार्यक्रमा प्रारभन्त । सयुक्त सगीताराधन– कविसम्मेलन, पानगोष्ठी च प्रारभेताम् । तत प्रीतिभोजोऽपि च सानन्द व्यवर्तिष्ट । समाप्ते हि प्रीतिभोजे यदा मन्त्रि महोदयो दीर्घायां जनपङ्क्तिं मतिक्राम्यति तदा प्रस्थानमगलार्थं करबद्ध प्रणामोन्मुख कारागाराध्यक्ष मद्राक्षीत् । तत करसङ्केतेनाहूय वार्तालाप कुर्वाण प्राङ्गणैककोणे एकान्ते नीत्वाऽवोचत् —

मन्त्री — 'स बन्दी विपिनविहारी भवन्मते कीदृशोऽस्ति ? अथ कारागारे तस्य व्यवहार– वर्तनादिकञ्च किंविधम् ?'

अध्यक्ष — 'नाह किमप्येतद्गत विशेषेण जाने परन्त्वेतदहं नून जानामि यत् स कुलीनोऽप्यकोनागरिक । दौर्भाग्यात सोऽपराधित्वेन दण्ड भुञ्जानोऽस्ति । कारागारेऽपि स शिष्टजुष्ट व्यवहरति, तत्रत्यान्नियमांश्च सर्वात्मना परिपालयति सानुशासनम् ।'

मन्त्री — 'तद्भवान किमर्थं तत्कृते कमपि मुक्त्युपाय न चिन्तयति ?'

अध्यक्ष — 'नियमाधीनोऽहं किमिव हि कर्तुं पारये ? तथापि यावन्मदायत्तं तावत् सहानुभूति पूर्वकं व्यवहरामि । अन्यबन्दिनामपेक्षया सौविध्यं च तस्मै प्रयच्छामि ।'

मन्त्री — 'श्रूयताम् ! आगामिनि गणतन्त्रमहोत्सवदिने राज्ये केचन बन्दिनो महामहिमराज्यपालस्याज्ञया मोचयिष्यन्ते । अस्माकं मन्त्रालयाद्राज्यान्तर्गतानां बन्दिनां सर्वेषां सूच्यो नन्वामन्त्रिता सन्ति । यदि च भवानुचितमिव कल्पयति, तदा विपिनविहारिणोऽपि नाम स्वानुशंसा पूर्वकम् सम्प्रेष्यताम् । अहमपि च तत्कृते राज्यपालमहाभागं किमपि निवेदयिष्यामि । अत एव तद्भाग्यम् । विषयोऽयमावत्तीव गोपनीयः । सावधानं समर्यादं च रक्षतु भवान् मन्त्रमिमम् ।'

अध्यक्ष — 'यथाज्ञापयन्ति माननीया मन्त्रिमहाभाग । तथैव करिष्येऽहम् ।'

एवमुक्त्वा मन्त्रिमहोदयो मृत्तरयानमारुह्य ततः प्रतस्थे ।

( ८ )

अथाद्य गणतन्त्रदिवसस्य महापर्वोत्सवसमारोहो वर्तते । प्रातरारभ्यैव नगरे सर्वत्र लोकाः — विशेषतो राजकीया अधिकारिणः कर्मचारिणश्च सर्वसाधारणाश्च तमिमं महोत्सवमुद्यापयितुं हर्षनिर्भरमानसाः सोत्साहाः सोद्योगाः सयत्नाश्च दरीदृश्यन्ते । राजकीयेषु कार्यालयेषु सर्वेषु प्रातर्ध्वजवन्दनं, राष्ट्रीयगानं, प्रार्थना, भाषणानि च सम्पेदिरे । विद्यालयपाठशालादिषु छात्रेभ्यो मिष्टान्नं व्यतीर्यत । नगरे दीनेभ्योऽनाथेभ्य, कारागारेषु बन्दिभ्यश्च विशिष्टं स्निग्धं मिष्टान्नभोजनमदीयत । अनाथमहायाग्यविकलाङ्गेभ्यो वस्त्राच्छादनादीनि व्यतीर्यन्त । सायङ्कालीनेषु कृत्येषु खेलाकूर्दनानां सांस्कृतिककार्यक्रमायोजनानां, नाट्याभिनयसङ्गीतगोष्ठीनां, कविसम्मेलनानामिन्द्रजालकौतुकप्रदर्शनादीनां, भाषणव्याख्यानानां, दीपावलिदृश्यानां कार्यक्रमाश्च सडिण्डिमघोषं समुद्घोषिताः । सर्वत्रैव हर्षोल्लासोत्साहपूर्णमिमम्पूर्वमेव वायुमण्डलं सर्वजनमानसोल्लासकरमासीत् ।

सार्द्धदशवादनप्राये समये स्थानीये कारागृहे बहुदिनानन्तरं मधुरं स्निग्धं सुस्वादु सरसं च मिष्टान्नमातृप्ति भुक्तवन्तो बन्दिनोऽद्यावकाशदिनमिति स्वकीयेषु कोष्ठोटजेषु विश्रामसुखमनुभवन्तो निर्यन्त्रिता प्रसन्नाः स्वस्थाः सुदिनमात्मानं मन्यमाना मोदन्ते । कारागाराध्यक्षः स्वकार्यालये सेवाग्नकक्षासीनोऽस्ति । बन्दी

विपिनविहारी कार्यालयस्य तस्य कक्षकोणे भूमावेवार्द्धं निद्राण स्तिमितलोचनो मुहुर्मुहुर्जृम्भमाणो विमना विषण्णो निषण्णश्च वर्तते। तथा भूतं विपिनविहारिणमालोक्याध्यक्षमहाशयो विनोदगर्भया गिरा सानन्दस्मितं तमवदत्—

अध्यक्ष — 'अये, विपिन ! अपि त्वां निद्रा बाधते ? तत एव त्वं भूयो भूयो जृम्भसे खलु ! मन्ये, ऽद्य यथेच्छम् सुरिभोजनादेव त्वमेवमालस्याभिभूतोऽसि।'

विपिन — ( निर्लज्यमिव पश्यन् ) 'नहि श्रीमन् !'

अध्यक्ष — 'अपि सत्यं वदसि ?'

विपिन — 'महोदय ! सत्यं वदामि।'

तावदेव केनापि भृत्येनाध्यक्षकक्षं प्रविश्य विज्ञापितम्—'श्रीमन् ! मण्डलाधीश महोदयाः समायान्ति। मृत्तर ध्वनिं शृणुत।' अध्यक्षो यावदुत्थाय सरभसं कारागारस्य प्रवेशद्वारमायाति, तावदेव मण्डलाधीशोऽगोपुरं सम्मुखमाजगाम। अथान्तः प्रविश्य च स वेत्रासनमुपविश्य स्वकञ्चुकस्यूतान् पत्रमेकं माकृष्य तत्पठन्मानो राजाज्ञामिवाश्रावयत्—

"अद्य तावद् गणतन्त्रदिवसमहोत्सवं स्वाधीनभारतराष्ट्रस्यैतस्या स्माकं वर्तते। केन्द्रिय सर्वकारस्यादेशानुसारं राज्यपालमहाभागो महामहिमोऽस्य राज्यस्य मन्त्रिमण्डलं तत्सम्बद्धं मन्त्रालयं चाज्ञापयति यद्धि स्थानीये कारागारे निगडिताग्निस्नाङ्कितान् पञ्चापराधिनो बन्दिनो मण्डलाधीश स्वयं तत्र गत्वाऽध्यक्षमादिश्य मोचयतु— (१) सीतारामः (२) साधुदासः (३) रामभजनः (४) दुर्गाचरण (५) विपिनविहारी चेति।"

मण्डलाधीशस्यागमनं श्रुत्वाऽसर्वे कर्मचारिणो बन्दिनश्च तत्र कारागारप्राङ्गणे समवेता आसन्। तेषाम् सर्वेषामुपस्थितानामेव मण्डलाधीशसमक्षमेव प्रोक्तास्त इमे पञ्चापि बन्दिनो लोहकारावन्धनानि विच्छिद्य तत्कालमेव निर्मुक्ताः। स्वातन्त्र्यमाप्य ते पञ्चापि जना हर्षनिर्भरमानसा स्वगृहान् ययुः।

( ६ )

अथ च गृहं प्राप्तो विपिनविहारी द्वारं प्रविश्य प्राङ्गणमध्ये स्थितः स्वपत्नीं मृणालिनीमुच्चैः स्वरं समबोधयत्— 'अये ! प्रिये !! मृणालिनि !!!

प्रियतमे !!! क्वनु स्खलुवर्तसे ? किं वा कुर्वाणासि ?? इह्यागच्छ ! पश्य, कारा-गृहान्निर्मुक्तोऽहं गृहं प्राप्तोऽस्मीदानीम् !! आयाहि ! आयाहि भो ! क्वासि त्वम् कल्याणि ? किं करोषि ???'

आकर्ण्य चिरपरित कण्ठ– स्वर गृहान्त कक्षतो बहिरागत्य मृणालिनी सहसा किमत्यन्यदद्भुत विस्मापकमवितर्कितमसम्भवमिव सम्मुखे साक्षाद् भ्रमान प्रत्यक्ष पश्यन्त्यपि स्वने मदर्शनं न विशस्वास। केवल मौनमास्थिता दिङ्मूढा विभ्रान्ता चित्रलिखितेव क्षणमपि विचित्रामेवात्मनो मनो दशा, मानसीं विह्वलता गोपायितुम-पारयन्ती विस्फारितलोचना जडता गतेव निर्निमेष ससम्भ्रम पश्यन्ती तस्थौ। कञ्चित्कालं विपिनं विलोक्य महता काठिन्येन स्वात्मचेतनामुपलभमाना, यथार्थ ज्ञानविरामा, लज्जमाना, प्रवेपमानाङ्गयष्टि, प्रस्वेदक्लिन्ना, मूर्च्छन्तीव, विगल-श्रुधारा सवेगं विपिनसमीप कयापि मनोवाचामगोचरया प्रेरणया प्रसह्य तथाकृतु नियोज्यमानेवागत्य तच्चरणौ ववन्दे। प्रणयाश्रयंह्रीसद्धोसगद्गद चोवाच—

'स्वामिन् ! किमिदं पश्यामि !! स्वागतं ते मम हृदय सर्वस्व !!! स्वागतम् ! जीवितेश्वर !! दयित !!! प्राणनाथ !!! स्वागतं ते !!! कथमिव निर्मुक्तो भवान् बन्दिगृहात् ? दण्डभोग्यात् कालावधे पूर्वमेव हि कथ प्राप्तो भवानत्र ?? स्वागतं ते प्राणवल्लभ ! स्वागतम् !! धन्योऽय दिवस !!! धन्य-श्चासौ क्षण !!! महत्सौभाग्यस्य विषयोऽय यदहं प्राणनाथ, स्वामिन भर्तार गृहागत साक्षात् पश्यामि !!!

विपिन – 'प्रिये ! समाश्वसिहि !! प्रकृतिस्था भव !! [ महतीयं दीर्घा च मम मुक्तेः कथा। प्राप्तकाल विस्तरेण त्वा कथयिष्यामि ! बाले ! मुग्धे !! मन माशुच। आनय तावदासनम्, जल च पातुमिच्छामि। हतभोज नोऽस्मिसन्तृप्त। आम्, आनीयन्ताम् तावन्मम क्षौर कर्मसाधनोपकरण-मञ्जूषादर्शादीनि। स्नानार्थं जलं, धौतानि वस्त्राच्छादनानि चोपस्था-प्यन्ताम्।'

मृणालिनी – 'क्षणात् सर्वं साधयामि दासी तेऽहं स्वामिन् ! उपविश्यतामत्र। इदमा-सनम्। न जाने त्वरमाणापि शीघ्रता कर्तुं न पारये तदिदमर्थम् ? जाग्रदवस्थायामपि च स्वप्न मिवानुभवन्ती स्वकर्तव्य परिपालयितु नाऽमन प्रभवामि।'

एवं वदन्ती मृणालिनी स्वपतेर्विपिनबिहारिण सेवार्थ यथोक्त कर्तु व्यवस्यति।

अथ कृतशौचः स्नातो विपिनविहारी वस्त्राणि परिधाय गृहीतविश्रामो मध्याह्नोत्तर मृणालिन्याः प्रणय चाटु पूर्णैर्दुर्लभवचोभिः जागरितो विहाय शय्यामुत्थाय च वेत्रासनमध्यासीनोऽस्ति साम्प्रतम् । तत्सम्मुख भूमावेव मृणालिनी चापि निषण्णास्ते । गुरुगुरुविरहयो तयो परस्परमित्थ सम्भाषण क्रमेण वार्तालापः प्रवर्तते-

मृणालिनी – 'दयित ! प्राणपते !!! अतीव दुर्बलगात्रो भवान् दृश्यते । मन्ये तत्र कारागारे निर्दयपुलिसपीडितो भवांस्तत्रत्य क्रूर कृपाणैः कठोरहृदयैर्निष्ठुर च दण्डितो भवेत् ।'



विपिन – 'प्रिये ! नाप्येव मयथागतोऽपि नादरा किमपि पद्मज चिन्तयामि । तथाहि तत्र आरम्भतन्का पर्यन्तम सर्वत्र ससुखमातिष्ठम् । स्वगृहनिर्विशेषमेवाहं तत्र कालमन्यवाहयम । वस्तुतस्तत्र विरहादन्यत् किमपि दुःख नान्वभवम् । सत्यं ब्रवीमि । आम् किमपि दौर्बल्यमिवालक्ष्यसि तत्कारणं त्विदमेव भवितुमर्हति, यदहं सर्वदैव त्वच्चिन्तयाक्रान्तोऽभूवं यत्त कदाचिन्मम मृणालिनी स्त्रीहृदयसुलभयाऽबला जनस्वभावभीरुतया वा रहस्य भेद कुर्वीतेत्याशङ्कयैवाहं मनाग् दुर्बलता गत स्याम् । नान्यत्किमपि मम क्षीणत्वे कारणान्तरमास्ते । आश्वस्ता भव । स्वस्थोऽस्मि, सकुशलोऽस्मि सानन्दोऽस्मि च प्राणवल्लभे !'

मृणालिनी – 'आश्चर्यं मे भवति नन्वेवंविध भवद्वच श्रुण्वन्त्याः ।'

विपिन— 'अयि स्वभाव मुग्धे ! मृदुल कपोले !! भीरो !!! प्रिये मृणालिके ! तदिद द्रव्यापहरणकर्माकौशलमपि 'योगः कर्मसु कौशलम्' इतिवद् योगसाधनतपश्चर्येव दुःसाध्य दुष्करच कर्ममन्यताम् । तदद्य मम योगसमाधिश्चरमा सिद्धि प्राप्तवान् ।'

मृणालिनी – ( समन्दस्मितम ) 'कान्त ! भवानधुना मम कोऽप्यैन्द्रजालिक इव प्रतिभाति । धन्याहमेकैवम् ! धन्या न मायाविना ! मदन्तिके वा तव मायामिमामीदृशीमिवमित्थ वेद ! पर सम्प्रत्यहत्ययातीवयाश्चर्यकर दुस्साहसिक दुष्कर च कर्मानुष्ठितम् ।'

विपिन :– वस्तुतस्त्व न जानीषे यथायंनो जगज्जाल प्रपञ्चमनुनाऽऽधुनिकयुगीनम् । पुनरिदानीन्तन स्वराज्याभिधान दुश्शासनमराजक त्व सर्वथा न परिचिनुषे । तत एव विस्मयसे । अधुनात्र देशे योजनापकौशलभिन्नवर्षाकालीन जलमिव सर्वतो धनमपरिमेय प्रभूतधारासारम् प्रवहद् वर्तते । तच्च

सज्जना सदाचारा परलोकभयाद्विभ्यतो ह्यास्तिका भोक्तु न प्रभवन्ति परन्तु मादृशा कपटपटवो धूर्ता वञ्चनाकुशला विदूषकशिरोमणय एव तदुपयोग कर्तु सक्षमा भवन्ति । सत्यमेव मन्यस्व मद्वच ।'

मृणालिनी 'अस्तु तावत् । अथाधुनावाभ्यां किमनुष्ठेयम् ? को हि जीवनपथ स्वीकरणीय ?? केन विधिना च व्यवहर्त्तव्यम् ??? त मे स्वयोजनानुरूप निरूप्यताम् । तथैवाहमाचरेयम् ।'

विपिन 'इदानीन्तु द्वाभ्यामपिचावाभ्या दम्पतिभ्या अत्रैव दुःखदग्धाभ्यामभिव्यञ्जनाभ्या दुर्भाग्यविडम्बनोत्पीडिताभ्यामिहैव नगरे वस्तव्य खलु । मम मृत्यो सम्वाद स्वमहात्म्यात् स्वत एव सर्वत्राचिरादेव प्रचारमाप्स्यति नाम नूनम् । ततो बन्धुबान्धवा मित्रसुहृद परिचितास्तथाऽपरिचिता हितैषिण कौटुम्बिका सजातीया प्रतिवेशिनोजनाश्च सर्वेऽस्मद्गृहमना कुलाश्चाप्यवश्यमागमिष्यन्ति, ते च सर्वे कृतका सहानुभूति, कृत्रिमा समवेदना, गतानुगतिका, मिथ्याचारवचनावलिगर्भा हितैषणा, साडम्बरा बन्धुता च मत्परावृत्तीस्त्वयि शोऽपि निम्नैरभिनाटयिष्यन्ति ध्रुवमिति मम मानवहृदयमनोविज्ञानम् । तथावाभ्यामपि त सामान्य तथैव व्यवहर्त्तव्यम् । ततोयथेच्छ करिष्याव । ( सगम्भीरभावम् ) अपि तदशीतिसहस्र मुद्रामित धन त्वया प्रयत्नपूर्वक सुरक्षित वर्त्त सराक्षम् ?'

मृणालिनी – ( समन्दमधुरस्मित विपिनविहारिणो मुखमुद्रा प्रेक्ष्य ) अन्यथैव तत्तथैव निगूढ सुरक्षित मातृजारमिव यथा भवान् मे निःशेषरूप समर्पितवान् ।'

विपिन – 'अस्तु तावत्त्वमपि च मेऽर्धाङ्गी नवयुगक्रान्तिकारिणी स्वराज्योत्तर शिक्षा दीक्षासंस्काराचारवती वीरवधू । त्वय्येतन्मम् विश्वासानुसार सर्वथोप पद्यते । अथ पुनरवधीयताम् ! अद्य तावद्गणतन्त्र दिवसमहामहोत्सव । नाद्य कोऽपिचाऽत्रागमिष्यति । सर्वेऽपि च नागरिका लोकास्तमिममुत्सवमुत्थापयितु क्रीडासी इव गड्डलिकाप्रवाहमनुसरन्तस्तन्मनस्कास्तद्गत प्राणस्वासोच्छ्वासास्तच्चेष्टास्तत्समर्पितनाशेषमनोऽनुरागास्तत्रैव जीवनसारतत्व विन्दमाना मोमुद्यन्ते । आवां तावत्स्वगृहमेवाधिवसन्तौ अद्य रात्रौ तमिम महोत्सवसमारोह सानन्द समुद्र च द्विरागमनसमये मधुरजनीमिवोद्यापयाव, यमुन्मदं निमित्तीकृत्याह कारागारान्निर्मुक्तोऽत्र स्वामुपगतोऽस्मि, मृणालिके ! बाले !!! मुग्धे ( एव वदन् विपिनविहारी स्वपत्नी तां मृणालिकां भुजपाशे सुदृढ गृहीत्वालिलिङ्ग चुचुम्ब च चिरम् )

## आत्मवेदना

प्रभाकर शास्त्री

धौङ्गलो जात्या चमकार आसीत् । स सवर्णानां क्षेत्रेषु हलादिपरिचालनेन स्वजीवनं यापयति स्म । परिवारस्येतरे सदस्या अपि श्रमादिकैर्यत्किञ्चिदर्जनम- कुर्वन् । मूलत त सर्वे श्रमिका आसन् । प्रातरारभ्य सूर्यास्तं यावत् श्रमं कुर्वन्तो पि स्वल्पमेवार्जनं कर्तुं पारयामासु । सर्वेषां सम्मिलितेन परिश्रमेणापि नोदरपूर्तौ क्षमास्ते । वृत्तिरहिते तु दिवसे सर्वे एव उपवासमकुर्वन् । सत्यमेव तेषां निर्वाह कृच्छ्रतया समपद्यत ।

अद्य तु धौंगलो विपद्ग्रस्त इव आभासते स्म । काऽपि नव विपद भृश- मविनश्नात त वराकम् । न केनाऽपि गृहसदस्येन सहाऽऽलप्तुमियेष स । तदीयाऽन्त र्वेदना तु मुखमुद्रया प्राकट्यमवाप । मन्त्रौषधिभि मरुद्वीर्यं सर्प इव स मनस्येव क्रुध्यति स्म एतेनान्त मनेशेन तदीयो देहो यदा कदा भृशकम्पत ।

प्रातरद्य ग्रामणी स्वयं तदीयोटजद्वारे समागत्याऽगर्जत्— ' ह्यः तवात्मजा राधा कृषिकार्यमसमाप्यैव क्षेत्रात् पलायिता । न च तया किमपि कारणमाभिहितम् । एतादृशी वृत्तिन खलु क्षम्या । अद्याऽपि न स्थास्यति चेन साऽस्माकं क्षेत्रे सूर्यास्त यावतदा न स्थातु शक्ष्यसे स्माकं ग्रामे ।"

ईदमित्थं तन्निर्जगाम स । धौंकलस्तु मूक मन्न किमपि जगाद । स तु गच्छन्त तमुत्पीडक स्वदृष्ट्या दग्धुमिव कामयामास । न किमप्युत्तरं प्रायच्छत् स इतिकृते स्वात्मान बहुशोऽजुगुप्सत । क्षेत्रात् प्रत्यागतया राधया सर्वमेव समाधित मासीत् । ग्रामाध्यक्षस्य पुत्रणैकान्त सदृश्य तामालिङ्गितु प्रयासितम्, तया च शीघ्रमेव ततत पलायितम् । श्रुत्वैतत् स भृशप्रकुपित, परं नाऽक्षमत स प्रतिकर्तुम् । न श्रोष्यति ग्रामणी क्षणमात्रमप्येतत् । स तु राधामेव गर्हयिष्यति । तदनुसारं तु राधया एव क्षमाकष्टं प्रयतितं भवेत प्रत्याख्याने च कृते सति बंधेषा मर्दिता स्यात् । सत्य ज्ञात्वाऽपि ग्रामणी स्वात्मजं नैव गर्हयिष्यति । स खलु न

स्वीकरोति यदन्त्यजानामपि काचन प्रतिष्ठा भवति। [redacted] तु सर्वेषोदयोपपत्ति यत् मन्त्रगाता स्वर्गमार्गेणाऽन्त्यजा पावनतामापद्यन्त।

चिन्तयित्वैवं धीरन्तो न किमप्युक्तवान्, ग्रामणीपद को लाभो निरर्थकेन प्रश्नेन? अत एव मौनमाश्रित तेन। परं विपत्तिस्तु न निरस्ता। ग्रामाध्यक्षस्य वचनं राजादेश इव समाकलनीयं। तदा किं स स्वात्मजा तत्रैव प्रेषयेत् यत्र खलु ग्रामाध्यक्षस्य पुत्र तस्याः शीलं हर्तुं चेष्टिष्यते। न चेत् मा तत्र गच्छेत्, तदा ग्रामणी रोक्ष्यति। तदा किं कुर्यात् वराकः स? एवं चिन्तयता तेनाऽस्मनो भाग्यं बहु विनिन्दितम्।

किं निर्णीतं त्वया?" तस्य भार्याऽपृच्छत्। सा खलु बहुकालात् पत्युर्मानसिकचिन्तनोद्वेगमवाभाणाऽजीत्। राधाऽपि तत्रैव स्थिता लज्जत। स्थितिर्गाम्भीर्यं स तत्सम्पर्कितमुभयो कृते। तत्प्रतिक्रियास्तु सर्वथाऽन्धेय इव प्रतीयते स्म। न किञ्चन रक्षिता प्रतिष्ठा सुरक्षा वेति निर्णीत ताभ्याम्। राधा तु निर्भीकतामादाय स्वजीवनमेव धिक्कार। तस्या एव कृते पितरौ विपद्ग्रस्तौ सञ्जातौ। अन्यथा तु न कदाऽप्यसौ रव्यमनुभूतवन्तौ तावुभौ। विचिन्त्यैतत्, केवलं स्वानि भाग्यानि निनिन्द सा अपितु मनुष्याऽश्रद्धा सा भृशं विषयानकार।

'निर्णयस्तु मजान।" बहुकालानन्तरं मस्तुदीरयामत्सधीरत। 'अपमानेक्षया तु मृत्युवरीया। अथवाऽप्रेरणायैव त्यजेम ग्राममनम्, न कोऽपि रोत्स्यत्स्मान् समीपगानृन् निगीय। युज्यते किमेतत्?" प्राम्तीत् म पलायनमेवम्।

परं कुत्र गन्तव्यमस्माभि?" कलत्रेण पृष्टम्।

"कुत्राऽपि। न्यक्ते खलु सर्वस्मिन् मा विचारं न हृते। साम्प्रतं तु ग्रामस्य सुरक्षं बहिर्गमनमेव चिन्तनीयम्। बहिरपि चेद् कुत्रोऽस्ति प्रस्तुतो भगयितुमस्मान्। तदा ईश्वर एव रक्षिता।" प्रत्यदितेवं भाग्यवादितायोरुलेन।

× × × ×

कालः स अर्धरात्रः। निस्तब्धो पि ग्रामो निद्राया अधीनो दृश्यते। यदा कदा प्रियाविरहितस्य कुक्कुरस्य कुक्कुर स्ववद्यमेव मौनवतामवन्नगत। कश्चित् मयमी तत्र आगतो न वेति वर्यावेतु तु न पश्यते। कम्पितानोऽपि कश्चिज्जन नारकाणि गणयितु प्रयतते न वेति निर्णेतुमपि न शक्यते। पश्मेनत् खलु स्पष्ट यत्न कोऽप्यस्य नेषा निष्क्रमणम्।

घौकलस्य समग्राऽपि गृहसामग्री लघौ घल्वेके प्रसेवे सङ्कुली भूतमासीत्। प्रसेवश्च तस्य स्कन्धमाश्रयति स्म। भारश्चास्य नाऽऽवाधत तदीया गतिम्। सत्यमेव स अस्खलितया गत्या चलति स्म। तस्य भार्या पुत्री च तदनुसरणमकुरुताम्। पर ग्रामनद्याऽतिक्रान्ते सति तेषा गति समवरुद्धा। न केवलमेको वृक प्रत्युत त्रयो भयावहा वृका भुशुण्डिभि सज्जिनास्तत्र मार्गमवरुध्य तिष्ठन्ति स्म। दृष्ट्वैव तान् नरराक्षसान् राधा तदीया जननी च भृशमबिभीताम्। क खलु त्रायेत तान् तावदिदानीम्। तत् स्थल सर्वथैव जनशून्यमासीत। निःशस्त्रा खलु ते वृकान् रोद्ध कथ क्षमिष्यन्ते?

"किमिच्छसि भवन्त" साहसमिवाधृत्य प्रपच्छ घौकल।

"जीवितु चेदिच्छसि, तदा प्रतिनिवृत्य ग्रामाध्यक्षसमीप नयाऽस्मान्। मार्गे न किमपि वक्तव्य त्वया। कोलाहले कृते सति यमालयमेव प्राप्स्यसीति जानीहि। तद्गृहस्य स्थितिरपि त्वया वर्णनीया। न काऽपि त्रुटि स्यादस्या वर्णनायाम्। अन्यथा गोलिकैषा तव हृदयस्थल सद्य एव भेत्स्यति।" वृकस्य कथन सुस्पष्ट सदेहातीत चाऽऽसीत्।

घौकल विस्मित आसीत्। तदीय परिवारोऽपि विगतभय इव प्रतीयते स्म। तैरनुमित यदेते वृका ग्रामणीमेव प्रसितुमिच्छन्ति। प्रतिनिवर्तन त्ववश्यमेव विधातव्य तै सर्वै। न कोऽपि विकल्प आसीत् तस्मिन् विषये। ग्राम प्रतिनिवृत्ते सति यद् भविता तद् भविता। न पारयामासुस्ते किमपि प्रतिविधातुम्। विचिन्त्यैतत् घौकल स्वपरिवारेण सह ग्रामाभिमुख सन् प्रययौ। वृका खलु तानन्वसरन्।

घौकलो निश्चिन्त इव मार्गमलङ्घत। राधा तज्जननी च तस्याऽनुसरण-मकुरुताम्। परिवृत्ति तु मनसैव न कामयामासुस्ते सर्वे। को जानीते यत् परिवृत्तिरेषा वृकान् क्रोधयति। अत एव मौनमाश्रित्य ते मार्ग सङ्घन्तेस्म।

ग्राम प्राविशन् ते सर्वे। कुक्कुराणा बुक्कन तै सम्भावितम्, पर वृकैर्भीतास्ते स्वलाङ्गूल पादयोर्मध्ये कृत्वा कुत्राऽपि विलीना इव बभूवु। अतर्कितमेतद् घौकलस्य कृते। कथमेतत्? कुक्कुरा न योपप्रन्त्यपरिचिना प्रवेशमस्मिन् ग्रामे? पर नाऽऽसमत m तन्निर्धारणे।

"तत् खलु ग्रामाध्यक्षस्य गृहम्।" घौकलेनैकस्या दिशि इङ्गितमिव कृतम्।

"कि वय गच्छेम साम्प्रत स्वगृहम्?" पुन पृष्टवान् स, पर न किम-

प्युत्तरमासादितवान् । वीतचिन्तोऽपि स पुनरपि स भयग्रस्त समजायत । परिवृत्ति कुर्यान्न वेति स चिन्तयामास ।

"अत्र तु न कोऽपि विद्यते ।" राधयोद्घोषितमेतत् श्रुत्वैतद् धौकलोऽपि परिवृत्य तान् वृक्षानन्वेष्टुमियेष, परं सत्यमेव ते नाऽवर्तन्त तत्र । विमूढा इव ते इतस्ततो दृष्टिमक्षिपन्, परं न कोऽपि तेषां दृष्टिपथमायात । वैफल्येनाऽनेन ते दिग्भ्रान्ता इव तत्रैवाऽतिष्ठन् । ततश्च स्वमस्तकं हस्तेनाऽऽस्फाल्य धौकलो गृहं प्रति प्रचचाल । परिवारश्च तमनुससार । ततस्तु प्रभाता खलु रजनी ।

"किं कुर्याम वयं साम्प्रतम् ?" स्वपरिवारमप्रच्छद् धौकलः । क्रन्दनात् किञ्चिदेव हीनमासीत् तस्य वचनम् । नैराश्येण च पूर्णेन आक्रान्ताऽऽसीत्तदाकृतिः स्तदीया । न स्थातुं न च गन्तुं शक्नुयुस्तदा किं कुर्युस्ते वराकाः । दौर्भाग्येन समुत्पीडितास्ते परिश्रान्तिवशाद् भूमावेवाऽस्वपन् ।

सूर्योदयः सञ्जातः, तदनन्तरं च मध्याह्नः । परं न आगतास्ते । अपराह्णे सञ्जाते काऽपि प्रातिवेशिनी राधाया जननीमाकारयामास । उत्तरमप्राप्य स गृहान्तः प्रविवेश, ददर्श च सुषुप्तावस्थायां समग्रं परिवारम् । पोटलिकामपि पार्श्ववर्तिनीं दृष्टवती सा । दृष्ट्वैतत् खलु साध्वसं गता सा । ततश्च तया प्रातिवेशिकाः आकारिताः । क्षणाऽभ्यन्तरं एव तत्र जनसम्मर्दः सञ्जातः । अनेन कश्चिद् व्याघात इव सञ्जनितः तस्य परिवारस्य निद्रायाम् । चक्षुषी समुन्मील्य तेऽपश्यन् सर्वान् खलु परितः स्थितान् । दृश्येनानेन समग्र एव परिवारः त्रपया समाक्रान्तः ।

किमद्य शयनमेव विधीयतेऽपराह्णं यावत् ? किमर्थं चैषा पोटलिका ? गमनं तु नेष्यते भवद्भिः कुत्रापि ? प्रश्नानां वर्षैव कृता पार्श्ववर्तिन्या तया ।

"न जिगमिषाम कुत्राऽपि ।" समुदीरितं धौकलेन ।

"परमेषा पोटलिका तु स्वल्पयनं सर्वमेव कथयति ।" सा सानु तर्जयन्तीवाऽ-तर्जयत् सतृष्णमिव गृहपतिम् ।

स किमप्यत्याहितमिति कृत्वा प्रातिवेशिकास्तु शनैः शनैः ततो बहिर्जग्मुः, परं सा प्रातिवेशिनी नाऽमुञ्चत तान् सर्वान् । इतस्ततो दृष्टिं निक्षिप्य तया ज्ञातं परिवारस्याऽनशनम् । ततस्तु सा सत्वरमेव स्वगृहं गत्वाऽन्नचूर्णादिकमानिनाय ।

परं यदा सा पाकक्रियायै वह्निप्रज्वालयितुमारेभे तदा राधया समुत्थाय स्वयमेव पाककार्यं प्रारब्धम्। दृष्ट्वैतत् प्रतिवेशिनी दम्पत्योः पार्श्वे समुपाविशत्।

"श्रुतं किं भवद्भ्यां यद् ग्रामाध्यक्षस्य पुत्रो व्यापादितः ?" भणितं तया।

"किम् ? किम् ? जाग्रताविव बभूवतुर्दम्पती।

"अद्यैव काले केचन दस्यवो ग्रामाध्यक्षस्य गृहे बलात् प्राविशन्, शयानं च तस्य पुत्रं यष्टिकाप्रहारैरघ्नन्। अन्यांश्च न किमपि कर्षयित्वा गृहाद् बहिर्निर्गत्य कुत्रापि व्यलीयन्त। ततस्तु महान् खलु कोलाहलस्तत्र समजायत। कथं नाऽश्रृणुत यूयमेनम् ?"

"वयं तु गहननिद्रामसेवामहि। कथं च बुभुक्षिताः खलु जागरणं विदध्यु ?" चातुर्यं प्रकटीचकार धौकलः।

श्रुत्वैतत् न कोऽपि सन्देहो जनिं लेभे प्रतिवेशिन्याः मनसि। सा तु पाककार्ये समाप्ते सति कार्यव्याजेन स्वगृहं प्रतस्थे। तस्या निर्गमनेन समग्रं परिवारं समुच्छ्वासमिव लेभे। आहारं समाप्य ते सुखमासत। स्वनिर्गरिवर्तनमालक्ष्य च तैर्ग्रामपरित्यागस्य निर्णयः सर्वथैव त्यक्तः। न काऽपि बाधा पुनर्जनिष्यते, इत्येवं समचिन्तयन् ते।

कतिपये दिवसा व्यतीता खलु। न किमप्यसामान्यमजनि तत्र। परमेकदा आरक्षिणः समायपुस्तस्मिन् ग्रामे हत्यायाः सम्बन्धे। सर्वे ग्रामवासिनस्तैराहूताः पृष्टाश्च रहस्योद्घाटनाय। निहतस्य जीवनीमभिलक्ष्याऽपि केचन जना रहसि आकारिताः। आरक्षिभिः समाश्वासनमवाप्य ते खलु मृतस्य कलुषितं जीवनं साकल्येनोद्घाटयामासुः। श्रुत्वैतदारक्षिणः स्तब्धा इव समजायन्त।

"किं हत्यायाः पूर्वस्मिन् दिवसे किमपि कुचेष्टितमासीत् निहतेन तेन ?" जिज्ञासां कृतवान् कोऽप्यारक्षी।

तत्तु न जाने। परमेका युवतिस्तेनोत्पीडितेव सम्भाव्यते। यतो हि सा कार्यं मध्य एव परित्यज्य स्वगेहं गतवती। न च सा प्रत्यागता तत्र श्रमकार्याय।" स्मृतं खलु केनाऽपि प्रेक्षकेण।

ततश्च राधा समाहूता पृच्छार्थम्। आरक्षिवर्गं दृष्ट्वा तु सा भृशमवेपत।

पितृभ्यां निर्दिष्टा सा सत्यमुद्घाटयितुं प्रस्तुता नाऽऽसीत् परमारक्षिणां चातुर्येण तर्जनेन च विवशेव सा समग्रमेव घटनाचक्रं न शशाक गोप्तुम्। श्रुत्वैतत् आरक्षिणस्तेऽभिनवायां दिशि स्वकीयमन्वेषणमारेभुः। परं न साफल्यमापुस्ते। राधायाः कथनं पितृभ्यां सम्पुष्टमासीत्। अत एव न खलु तदविश्वसनीयमारक्षिणां वृन्दे।

अधुनाऽपि हन्तॄणामन्वेषणं क्रियते परं तेषामभिधानमद्याप्य- विज्ञातमेव वर्तते। हताशा इव दृश्यन्ते समस्ता आरक्षिणः। सपरिवारः श्रीकलोऽपि न जानात्यद्यापि घातकानां नामानि न च स्मरति तेषामाकृतिविशेषम्। परं कृतोपकारस्त्वासीदेव सः, यतो हि तैरेव विवशीकृतः स परिवारेण सह स्वगेहं प्रत्यागन्तुमक्षमत। आश्वस्तेऽधुना सः —

'गुप्तं रक्षेद्धि गुप्तता।"



सौदामिनी । अट्टहासमात्मन्यस्य कुर्वन्नवोचम्– नातिदूरं तद्दिनं यदा मे विवाह सम्पत्ता ।

तेन किम् ? अस्मिन्नेव गृहे सम्पन्ना नैके विवाहोत्सवाः ? इत्युक्तं तेन ।

यदि भवता अस्य गृहस्य परिष्कारः कार्यते तदा वरम् ।
किम् ? परिष्कारेण गृहमिदं स्वर्गतां यास्यति ? ।

अलं विवादेनानेनेति विचार्याहमुपायागत ।

अष्टौ दिनानि व्यतीतानि । मम भाविन्या पत्न्या समीहितं वर्धमानं आसीत् यत् दयितसदनं समवलोक्य शीघ्रतया सम्पादनीयो विवाहः । इदानीं समेधितं मे दैन्यम् । कथमिव तु नामेमां निवेश्य स्वप्रशंसा ? 'सर्वसाधनसम्पन्नं भव्यं सदनं मे निवासः' । तत्र विराजन्ते नैके गवाक्षाः । वातायनं बहुत्र परिलक्षितं शीतं तापनिवारणार्थं मे भवनं सर्वं सुखदं प्रियदर्शनञ्चास्ते' । श्रुत्वा च प्रशंसां ममगृहस्य स्मेरानना मे भाविनी दयिता । गृहस्य चाप्यत्वरितमेव परिज्ञातं यत् मया सह प्रणयसम्बन्धात् प्राक् आसीदसौ अन्यासक्ता । तेन सह तस्या विवाहोऽपि निश्चितः । पुनरसौ कस्मिंश्चिद् कार्यालये कार्यं कुर्वाणोऽवर्तत । अनुपलब्धभवनतया कस्यचिन्मित्रस्य गृहे कृतवसतिरसौ निरन्तरमितस्ततो भाटकगृहान्वेषणपरायणोऽपि यदा न शशाक भवनमुपलब्धुं तदा तेन सह भग्नस्तस्याः प्रणयसम्बन्धः । सा प्रत्यनुरागाद्रे क्षमसकालमेव जिज्ञासितं तया यन्मम कापि किमपि गृहमस्ति न वेति ? प्रश्नमिममुत्तरयता मया विनिवेदितं स्वभवनस्य कृत्रिमं भव्यत्वरूपं तस्याः प्रसन्नताऽस्याभाजिनी ।

ममगृहस्य स्थैर्यं मित्र मम प्रेयस्याः साहसमप्यपूर्वम् । एकस्मिन् दिनेऽकस्मात् समायाताऽसौ मदीयभवनम् । तस्मिन् समयेऽहं तत्रगृहे सद्यो जायमानस्य नवीनगर्तस्य मूलमन्वेषणं कुर्वन्नासम् । इह तस्या अतर्कितागमनं जातं मे काकतालीयन्यायसदृशं प्रयोजकम् । ननु त्वमस्मिन्नेवगृहे निवससि ? श्रुत्वा चेमं प्रश्नं मम मज्जातस्वेदबिन्दवोऽजनयन् मदीयं शरीरम् । जिह्वा म शुष्कतामगात् । गिरश्च स्खलिताः । उत्तरणीयं किमपीति विचार्य स्खलद्गिरा मयोक्तम्— नोपलभ्यते कुत्रापि समीचीनं भवनम् । यद्युपलभ्यतेऽपि किमप्यन्यद् गृहं चेत् तद्दिनोऽपि घृष्टम् । स्याद्यदि कथञ्चित् परिष्कारोऽस्य तदेदमेव भवनमनुपमं स्यात् । श्रुत्वा चैतन्नोक्तं तया किमपि । परं तस्या मनसि सञ्जातं तु कोपात इत्यनुभूतं मया । सा यावदुत्तरति मत्तोऽत्र तावदेकः स्थूलो मूषको प्रधावन् समागतः पादयोः प्रणिपातमिवाचरन् स्पृष्ट्वा मदीयौ पादौ प्रपलायितश्च । सा चोच्चैः शब्दायमाना

कम्पमाना च कथं कथमप्यवदत् । मया विहस्योक्तम् इमे मूषका एवेमानी मे सहचराः । तव गृहे ईदृशाः स्थूलाः सन्त्येव ? एवमुक्त्वा यावत्तया निर्दिष्टो हस्ता भित्तौ तावत् भित्तेरेव स्थूलास्तस्ततः पृथक् भूत्वा भूमौ पतित अयं चापरो विस्फोटो मम सरसजीवनस्य कृते ।

तत्रैवैतद्विपरीतं पश्यामि यथा चित्रितं गृहस्वरूपं त्वयैवावोचत् सा । लज्जया दीनतया व्यग्रतया च सहैवाशान्तो दीर्घकालिकं मौनव्रतं समाश्रयावोचम्— मा भैषीः प्रिये ? विवाहात् पूर्वमेव परिष्कृतमिदं भवनं मनोऽभिरामस्वरूपमवलोकयिष्यसि । सर्वसाधनसम्पन्नमेतस्मिन्नेवात्र भवने मूषकाणां प्रेतात्मानोऽपि नावलोकयिष्यन्ते का खलु कथा दशाननामानुनाम् । श्रुत्वा मदीयं वचः विमला हृदयमनुभवन्ती भृशं विस्मयाविष्टामिति व्याहृत्य तडिद्विलापणा सा ।

गृहस्वामिनं मायापतरिप्सुः परिवारजनैः सर्वो मे प्रयासो विफलः । एकदा तु शृङ्गारगोचरस्य सद्गुणान् यदि स्मरति । फलस्वरूपं कतिपयदिवसव्यापिनी खञ्जता मामितरामपतत् ।

एतस्मिन् दिने तस्य कन्या सौदामिनी रक्तलोचना लघु लघु गच्छन्ती मध्येमार्गं सम्मिलिता । प्रणामं कृत्वा तस्याः कारणं पृष्टा सा अकथयत् यत् विवाहः शीघ्रमेव सम्पत्स्यमानो वर्तते । वरश्च ममाभिरुचितः । मया च तस्य युवकस्य नाम सङ्केतादिकं सर्वं तत्र परिज्ञातम् । साम्प्रतं मे मनसि प्रतिशोधभावना । सौदामिन्या भाविनः पत्युः सकाशं लिखितानि मया पत्राणि यत् यो विवाहस्तव्यास्तीति तस्य पत्नमपि भास्करं चरणं भान्यम् । तव श्वसुरो यथा नाम तथा गुणरोऽस्ति । सोऽभवत् तु तस्य पराकाष्ठैव नाम्ने । सर्वाणि च तस्य गृहाणि बन्धक रूपेण दत्तानि वर्तन्ते । ये च भारवाहकाः यत्र कुत्रापि तस्य गृहेषु निवसन्ति, तैः सार्धं तस्य वैरं वर्तते । एवमपि श्रूयते यदसौ सर्वाणि विक्रीय तव शिरसि स्थास्यति अहमस्मि तवैव शुभेच्छुः । पत्राणि विलिख्य नूनं मत्र यास्यन्ति रचनं चमत्कार इति स्वस्थमना अहमतिष्ठम् ।

इतो मम प्रेयस्या सह मे सम्भेलनं पत्रवर्णितमेवावशिष्टम् । अन्तिमपत्रे मयालिखितं यत् मनस्योपरि, मम भारकभवनोपरि च त्वया ध्यानं न देयम् । किन्तु ध्यानं तु त्वया केवलं मदाभ्यर्थं देयम् । कृपा विधेया मयि । दयस्व, दयस्व, यतो यथा परिणयो निर्विघ्नं सम्पद्येत । एवं ज्योतिर्विदा कथितं यत् मम ग्रहाः शनैः शनैरनुकूलतामुपयान्ति । किञ्चित् मासानन्तरं द्विभूमे प्रासादे मेलापो निश्चितः ।

पञ्चदशदिनान्यतीतानि। मम गृहस्वामिनो गृहे आसीत् महान् जनसम्मर्दः। मया विचारितं स्यादेतत् कौतुकं मम पक्षायाम्। परं ममानुचिन्तनं वैपरीत्यमुपगतम् आसीत् सा तत्परता सौदामिन्या विवाहस्य। अहमस्मिन्नेव तर्कवितर्के यावदवर्तं तावत् पत्रवाहकः पत्रमेकं प्रायच्छन्मे हस्ते। पत्रमासीत् मम प्रेयस्या। किमत्र लिखितं स्यादिति शङ्कमानहृदयः पत्रं पर्यपठम्। तत्रलिखितमासीत्-- तव भाटकभवनदर्शनानन्तरं त्वया सह वैवाहिको विचारः सर्वथैव त्यक्तः। क्षम्यताम्। प्रपठ्य पत्रमहं भूमौ न्यपीदतम्।



## पङ्गुः

श्रीमती मञ्जु शर्मा एम ए

चिकित्सालयस्यैक कक्ष । तत्रैव कस्मिंश्चित् कोणे काऽप्येका शय्या । तामधिशेते कश्चिदातुर । न कोऽपि वरीवर्ति तत्पार्श्वे । अर्धमासं नीत स शल्यचिकित्सार्थं । दुग्ध्या तत्सम्बन्धिन । अद्य परश्वो वा समागच्छेयुस्ते । साम्प्रतं तु स एकान्तमेव भजते । बहुकालतस्तदीया दृष्टि पाददिशि प्रसरति । नयनकोणात् प्रवहन्त्यश्रूणि यानि स न शिक्षते रोद्धुम् । नैव च स प्रयतते तानि प्रमार्ष्टुम् ।

अद्य प्रात किमप्यचिन्तयत स । स्वानि भाग्यानि निर्णेतु दृढ प्रतिज्ञातमासीत् तेन । निर्णयस्तु सजात । पर सर्वेषामनपेक्षित स्यु । नाऽज्ञानात् । यत्तदीया प्रणयिनी न तोक्ष्यति समधिक्षुन्य । कियन्तमनुरोध कुर्यात् वराक स । पर सा नाऽनुष्यत् ।

"लक्ष्मि ! किं त्वया कोऽप्यन्योऽनुकम्पनीय नरणो ना ?

पृष्टमासीत् तेन ।

"न कोऽपि ।" सहजभावेन समुदीरित तया । नासीत् प्रवञ्चनालेशोऽपि वचसि तस्या ।

"ततो मा परिणेतु कथ न समुत्सहसे ?"

"कारणानि तु नैव विद्यन्ते । पर मम बान्धवैरेष उद्वाहो नैवाऽनुमन्यते । अत प्रतीक्षणीयमस्माभ्याम् ।"

'कीदृशी प्रतीक्षा ? द्वौ वर्षौ तु समतीतावस्या प्रतीक्षायाम् न साम्प्रतमपि परिवर्तन सदृश्यते तेषा विचार-सरण्याम् ।"

"किं करवाणि तावदहम् ? यथा मया, तथा त्वयाऽपि प्रतीक्षैव करणीया ? कियत्काल यावत् ते मामनूढामेव द्रक्ष्यन्ति ?"

"किमपि ब्रूयुस्ते । न चिन्तयामि तत् सर्वमेव । अन्यच्च न जनैरुदीरित किमपि वच स्पृशति मृत जनम् । अन त्यजैन प्रश्नम् ।" तस्य कथने कोऽपि निश्चय आभासते स्म ।

"पर मत्कृते तु चिन्तय तावत" पीडितेवाऽदृश्यत सा ।

"तत्खलु त्वयैव चिन्तनीयम् ।"

तदनन्तर न किमपि निगदित लक्ष्म्या । क्षण यावत् प्रतीक्ष्य उत्तस्थौ स । तथाऽपि सा मूकत्व नात्यजत् । न च निरुद्धस्तया निष्क्रमणत प्रियस्य मार्ग । अश्रूणि तु सतत प्रवहन्ति स्म तस्या नयनाभ्याम् ।

निराडम्बरमपमानमनुभूय स शोकाकुल इव समजायत । बहिरागत्य द्विचक्रिकामारुह्य च वाष्पयानमार्गं प्रतिप्राचलत् स । दृष्ट्वा तु तस्य गतिविस्खलन नदीपोद्भ्रान्तता समुद्घाटितेवासीत् । मार्गे च नैवोपलक्षितास्तेन नमस्कार कुर्वन्तो जना । आत्महननाय कृतसकल्प स विचार शून्य इव अभवत् स्म ।

शनै शनैर्द्विचक्रिका प्रचालयन् स समग्रमेव नगर समुल्लङ्घयामास । ततश्च स एतादृशे स्थले आजगाम यत्र लोहमार्ग किञ्चित् परिभ्रमति । तत् स्थल सर्वथा निर्जनमासीत् । वर्जनार्थ न कोऽप्यवर्तत तत्र । तदीयो विवेकस्तु पूर्वमेव तत्याज तम् ।

इतस्ततो दृष्टिपात विधाय स द्विचक्रिकामेकत पर्यत्यजत् । ततश्च स शनै शनैर्दूरतरं पद यापैर्लोहमार्गस्यान्तिके समागत्य अवातिष्ठत । अधुना वाष्पयानस्यन काऽपि ध्वनिस्तत्राऽश्रूयत पर तत्प्रचलनजनित किमपि प्रकम्पन तु स्पष्टमेवानुभूयते स्म । तदनुसार नाऽधिको विलम्ब आसीत् तदागमने । प्रतीक्षमाण किं कुर्यादिति विचिन्तयन्नेव स चोलस्य कोषाद् रिक्तमेक पत्र लेखनी च समुद्धृत्य लिलेख —

"एतदात्मघातकृते न कोऽप्यन्य उत्तरदायी । जीवनात् सर्वथा निराशोऽह स्वैच्छया प्राणान् त्यजामि । एतच्च सर्वथा सज्ञ एव लिखामि । सुरेश "

तत्पत्र चोलस्य कोणे विन्यस्य स एकत स्थित्वा एकाग्रतया वाष्पयानागमन प्रतीक्षयामास । किञ्चित्कालानन्तर धरा-प्रकम्पन ववृधे । यावन ध्वनिश्च मुखरतामादधौ । श्रुत्वाऽप्येतत् सर्वं न स स्वस्थानात् परिचचाल । बिभीषिकया आक्रान्तोऽपि नाऽदृश्यत स । स्पष्टमेव स मृत्योरङ्गीकाराय प्रस्तुत आसीत् ।

साम्प्रत यानागमन निकटतरमाभाति स्म। धरापकम्पनेनैको भयावहो विराव तत्र कर्णाऽस्फोटनमिव सजनयति स्म। पर सुरेशस्य मुखमुद्रया न प्रतीयते स्मैताऽपि विरोधिता तद् विचार वीथौ। तेन अर्पिता स्वीया दृष्टिर्यानागमनदिशि। विज्ञाय च तदागमनक्षण स सत्वरमेव लोहमार्गं शय्यामिव विधाय तदुपरि स्वदेहमतनिष्ट। भयविमुक्तश्च स निमीलयामास स्वनेत्रे। एव स्थिरेनैव तेन शवसाम्यमिवादधौ।

मार्गपरिभ्रममालक्ष्य वाहकेन पौन पुन्येन शीघ्र ध्वनिरुत्पादिता। न सम्प्रधारित पूर्वं तस्तेन यत् कोऽपि मुमूर्षुजनस्तत्र वाष्पयानस्य मार्गे शलाकयोरुपरि शेते पर क्षणाभ्यन्तर एव स निभालयामास व्यक्तिमेका तत्स्थिताम्। तत्क्षणमेव स यानगतिं मन्दतरामकरोत् पर वेगवाहुल्यवशादकस्मात् सद्यरोधोऽशक्य आसीत्।

तदैव 'आ' इत्युच्चैराक्रन्दनमश्रूयत। दुर्घटना तु नैव निवारिताऽभूत् निर्धार्य वाहकेन यानस्य गति सर्वथैवाऽवरुद्धा। ततश्च सद्य एव स नीचैरवततार। केचन यात्रिणोऽप्यौत्सुक्यवशाद् निजासनानि परित्यज्य दुर्घटनास्थले आजग्मुः। दृष्ट च तैः सर्वैर्दुर्घटनास्थल रक्तेनाऽऽप्लावितम्।

सुरेशस्तु सप्राण एवासीत्। पर यानाग्रभागस्य तीव्रेण प्रहारेण तदीयावुभावपि पादौ छिन्नावास्ताम्। छिन्नस्थलाभ्यामसृक् प्रवहति स्म सातत्येन। वेदनया समाक्रान्तोऽपि सुरेशो मन्द मन्द मधाऽऽक्रन्दत्। तदैव यानस्य रक्षिणा तत्राऽऽजगाम। तेन प्राथमिकोपचारपेटिकाऽपि सहैवानीता। पर दुर्घटनाया गाम्भीर्यं दृष्ट्वा नैवोद्घाटिता सा पेटिका तेन। छिन्नस्थनयोरावेष्टन त्ववश्यमेव कृतवान् स प्रभूताभिवस्त्रपट्टिकाभि।

'सत्वरमानयैन शकाटकाऽभ्यन्तरे। त्वरस्व च वाष्पयानम्। यानस्तम्भस्थले कोऽपि चिकित्सक उपलभ्य। तदधीनैवास्य समुचिता चिकित्सा।' इति निदिदेश यानचालक स।

चिकित्सकेनाऽपि स्थितगाम्भीर्यं सद्य एवाकलितम्। सत्वरमेव स मुख्य चिकित्सालय नियतमातुरम्। एतदभ्यन्तरेऽजस्र रक्तस्रवाच्च सुरेशो निस्सत्त्वतामाप। सज्ञामवाप्य तु स आमान तस्मिन् कक्षे शाणस्थायां शय्याया प्रतप्यमानमवैक्षत। प्राणान्तस्तु न बभूव इत्ययथार्थं स भृशमव्यथत्। स्थानि भाग्यान्यपि चक्षो: धर्षयत स। तेन तु मृत्युर्न ताऽऽसीत् पर मृत्युसमभिशप्तमिव जन नावृणोत्।

अधुना किं कुर्यात् वराक स ? कथमेषा दुर्घटना व्याख्येया सुहृज्जनाना बान्धवाना च समक्षम् ? लक्ष्मीश्च । नहि, नहि, तस्यास्तु स्मृतिरपि घ्रशमस्तुदा । अधुना तु तस्या कथैव समाप्तिमगमत् ।

एव चिन्तयत सुरेशस्य समवधान कर्णजपस्य ध्वनिना आकृष्टम् । अक्षणी समुन्मील्य स तद्दिशि दृष्टि चिक्षेप । तदीया ससज्जना विज्ञायैव आरक्षिजनस्तदन्तिकमागच्छत् ।

"ससज्ञोऽसि किम् ?" तेन पृष्टम् ।

"आम् ।"

"किमभिधान भवत ?"

"सुरेश ।"

"कस्मिन् विभागे व्यापृतोऽसि ?"

"  विभागे राजपत्रितं मम पदम् ।"

"ब्रूहि तावत् किमर्थमेष आत्मघातस्य प्रयास ?"

आरक्षिण स्वरे किमपि मार्दवमागतम् ।

"जिजीविषा मा परित्यक्तवती, इत्येव जानीहि ।"

"न जानासि किं दण्डनीयोऽसि प्रयासार्थंतादृशे ।"

"नाऽविज्ञातमेतत् पर नाऽज्ञानात्मह यदेष: प्रयास विफलतामेष्यति । नाऽत्र तत्राधीनोऽस्मि । यदिच्छसि तत् कुरु । प्रयतस्व यावद्मदर्थं प्राणदण्डाय । अधुना तु मृत्युरेव समधिक काम्या ।"

"सुरेशस्य मन स्थितिमनुमीय नाधिक पृष्ट तेनाऽऽरक्षिणा । पुनरागमिष्यामि" इति कथयित्वा कक्षतो बहिर्गत स । सुरेशश्च पुनरेकान्तमेव सिषेवे । समग्र जीवन पङ्गुभावेनैव यापनीयमिति विचिन्त्य स दारुण दशमनुबभूव । जीवन तु सर्वथैव पराश्रित भविष्यति, दयनीयता चाऽऽवहिष्यति । एतया विचारणया स भृशमपीडित । आजीविकाऽपि गतेव प्रतीयते । मित्राणि किमर्थमागमिष्यन्ति ? बान्धवास्तु सत्वरमेव परित्यक्ष्यन्ति माम् । तदा किं भिक्षावृत्तिराचरणीया ? अन्तिमेनानेन चिन्तनेन स न केवल मनसा, अपि तु देहेनापि कम्पननृत्यमिव समाचरत् ।

आतुरालये निवसता तेन त्रयो मासा यापिता । अस्मिन्नवधौ प्राय

सर्वे बान्धवा सुहृदश्च तं द्रष्टुं समाययुस्तत्र। वार्द्धक्येन जर्जरीभूतौ पितरावपि पुत्रस्नेहेनागच्छताम्। सुतस्य छिन्नौ पादौ दृष्ट्वा तु तौ मूर्च्छिताविव सञ्जातौ। परं किं कुर्यातां तौ वराकौ। बहूनि प्रवाहितानि ताभ्यामश्रूणि। दिवसद्वयानन्तरं च सुतं स्वभाग्यायत्तं परित्यज्य स्वनिलयं परावर्तितावुभावपि तौ।

सुरेशोऽपि पित्रोर्वेदनां सोढुं न पारयामास। तयोः समक्षं स आत्मनो मौढ्यं स्वीचकार। वृद्धावस्थायां तयोः सेवार्थं न कोऽप्यविद्यत माम्प्रतमिति परितापेनाऽपि स भृशं प्रपीडितः। आत्मघातार्थं विहितस्य प्रयासस्य वास्तविकं कारणं तु तेन नैवोद्घाटितं तयोः पुरतः। एतादृशे प्रसङ्गे समुपस्थिते सति भृशमन्वतप्यत सः। सत्यमेव तस्याः स्मरणमात्रेण स क्रन्दितुमैच्छत्। यस्याः कृते स प्राणानपि तृणमिवाऽमन्यत सा खल्वेकवारमपि तत्सन्निधौ नागतवती। सम्भवं किं यदेनां दुर्घटनां नाऽशृणोत् सा? श्रवणानन्तरमपि या न समागच्छेत्, सा किं प्रेम्णोऽधिकारिणी? किं तस्याः कृते प्राणान्तं विधातुमैच्छत् सः?

सुरेशस्त्वेतैः प्रश्नैर्वारम्वारं व्यथते स्म। निद्राऽपि पलायितेव। तदभावेऽक्षाण्यपि बहुशोऽशुष्यन्। कृशतां गतस्तदीयो देहः सततमवेपत। परं स चिन्तितो नासीत् तस्मिन् विषये। देहविषयको मोहस्तु पूर्वमेव तस्याजं तन्मनः निमवशिष्टमस्मिन् जीवने यत्नेन स देहमिमं रक्षयात्? अस्यां दुरवस्थायां तु देहत्यागः वरीयः इत्यचिन्तयत् सः।

श्वः चिकित्सालयान्मुक्तिर्भविष्यति इति विचिन्त्य सुरेशः स्वकार्यक्रमं चिन्तयति स्म। सुहृदां प्रयासैरात्मघातविषये न कोऽप्यभियोगः प्रस्तुतीकृतः आरक्षिभिरिति श्रुत्वा स स्वकीयं पदं पुनर्ग्रहीतुं सक्षमः आसीत्। गमनागमने किञ्चिदसौकर्यं भविता, परं तत्खलु कथमप्यतिक्रमणीयम्, इति विचिन्त्य स समाश्वस्त इव बभूव।

अधुना स चिकित्सकस्यागमनं प्रतीक्षते स्म। कार्यभारं पुनर्ग्रहीतुं सक्षम स इत्येतत् प्रमाणपत्रं तु चिकित्सक एव प्रदास्यति। तदनन्तरं स वाहनमानेतुं प्रार्थयिष्यति कमपि सेवकम्। गृहं गत्वा च यथाकथञ्चिज्जीवनं तु यापनीयमेवेति निर्धारितं तेन।

चिकित्सकः शनैः शनैरागच्छति स्म दृष्टिपथे। परमेकाकी नाऽऽसीत् सः। काचन युवतिरपि तमन्वसरत्। मार्गे गच्छन्ती च लक्ष्मीरिवाऽभाति स्म। आम्, लक्ष्मीरेवाऽभाति। ज्ञात्वैवैतत् स पार्श्वपरिवर्तनं कृतवान्। तां द्रष्टुं नाऽऽसीत् स।

"पश्य सुरेशमहाशय ! का आवनाऽवामानतुम् ?" चिकित्सक उवाच ।

"न शृणोषि किम् ? जाग्रतो ऽसि न वा ?" पुनः पप्रच्छ स ।

"न स्वपिमि ।" शनैस्सुक्तवान् स ।

"शृणु तावत् । गृहगमनायाऽनुमतोऽसि त्वं मया । कार्यभारं पुनर्ग्रहीतुं सक्षमोऽस्मीति प्रमाणपत्रमपि गृहाण । एषा लक्ष्मीश्च त्वां कस्मिंश्चिद् वाहने गृहं नेष्यति । शुभास्ते पन्थानः सन्तु ।" ईरयित्वैवं चिकित्सकस्तु प्रचलितः ।

'शकुन महाभाग ।' आकारयामास सुरेशं ।

'किं वक्तुकामोऽसि ?' पुनरागत्य चिकित्सकेन पृष्टम् ।

"एतया सह न जिगमिषामि ।" आक्रोशमिव प्रकटीचकार स ।

"किमर्थं गया आपत्ति ? या खलु मासत्रयं यावत् प्रतिदिनमत्र समाजगाम त्वत्स्वास्थ्यसूचनामधिगन्तुम्, या च त्वयि सुप्ते सति त्वच्छय्याप्रान्तं स्वेच्छया न तत्याज, सैव त्वया तिरस्करणीया ? धन्योऽसि त्वम् । न प्रत्यक्षीकृतैतादृशी कृतघ्नता पूर्वं मया । बाढम्, कुरु यत्तेऽभिमतम् ।"

निर्भर्त्स्य तमेव चिकित्सकस्तु निष्क्रान्तः तस्मात् कक्षात् ।

सुरेशः पार्श्वपरिवर्तनं विधाय लक्ष्मीं प्रत्यभिज्ञातुमिवारेभे । सा तु मूकभावेनाश्रूणि विमुञ्चति स्म । दृष्ट्वैतत् सुरेशस्य समग्रोऽप्याक्रोशः सर्वथैव विगलितः । अश्रु निन्ये च तस्य तदक्षिणी ।

"क्षमस्वाऽऽगच्छ लक्ष्मि !" स्वरं मार्दवमिवाऽऽनीय प्रावोचत् स ।

"... . . . "

"नैवागमिष्यसि किम ?"

"क्षम्यतां मां सुरेश !" कथनेनानेन सार्धमेव सा तत्पार्श्वं समागच्छत् ।

तदनन्तरं च तया स्वमस्तकं तदीयोरस्थले विन्यस्तम् । सगद्गदं रुदनमेव कृतवती सा बहुकालं यावत् । सुरेशस्तु मौनमाश्रित्य तस्याः मस्तकं स्वहस्ताभ्यामालिलिङ्ग ।

"आयाहि, गृहमयाव ।" कथमपि विमुच्यात्मानं तदीयात् परिरम्भणाज्जगाद सा । तमन्वैव सेवकमुपनन्दमानेतुं प्रार्थयामास सा । उपलभ्य चानीत

अति तदुपरि सुरेशं समुपस्थाप्य सर्वे ते चिकित्सालयस्य द्वारभागे समाययुः । वहित्रमेकं पूर्वतोऽविद्यत तत्र । तमारुह्य सुरेशस्याऽऽवासं प्रति प्रातिष्ठेतामुभौ तौ ।

यदा सुरेशः स्वगृहाऽभ्यन्तरे प्राविशत्, तदा स विस्मित इवाऽजायत । समग्रं गृहं स्वच्छं सुसज्जितं चासीत् । बहुमूल्यानि कानिचिदभिनवानि वस्तून्यप्यविद्यन्त तत्र । एतद् दृष्ट्वा स्तम्भ इव सञ्जाता तस्य वाक् । स तु स्वगृहं पुनि धूमरिलमनुमीय लक्ष्मीं नाऽऽनेतुमैच्छत् तदन्त । परमेतत्त्वतर्कितमेव सदृश्यते स्म ।

'किमेतत् ?" विस्मयं प्रकटीचकार सुरेशः ।

'नहि किमपि । नवदम्पत्योरावासयोग्यं तु विधेयमेव गृहम् ।"

"नवदम्पत्योः ! किमावयोरुद्वाहः सम्पन्नः ?" वराकः स अप्रतिभ इवासीत्

"मया वृतोऽसि पतिरूपेण त्वम् । सन्ध्याकाले मम पितरौ पुरोहितादिना सह समागन्तारौ । तदैव प्रदेयाऽस्मि ताभ्याम् !"

एतदुक्त्वा सा नवोढेव सलज्जतया स्थिता । सुरेशश्च केनाऽप्यनिर्वचनीयेन प्रहर्षेणाऽऽक्रान्तः सन् न किमपि वक्तुं पारयामास । स तु निर्निमेषदृष्ट्या प्रियतमामुखमेव प्रेक्षते स्म ।



# स्मारकम्

चन्द्रमौलि

अद्य गान्धिजयन्ती पर्वास्ति । देशे विभिन्नरचनात्मककार्याणां सम्पादनमस्ति । समाजसेविसंस्था लोककल्याणकार्याणां विनियोजनं कुर्वन्ति । स्वच्छतामभ्यासेऽपि प्रवर्तन्ते । रामपुरग्रामे विशालसमज्जावर्गवर्ती । तत्र प्रान्तीयहरिजनसंघस्याध्यक्षस्यागमनं निश्चितं वर्तते । सामाजिककार्यकर्तारः सर्वेऽपि विचारधारया प्रचारप्रसारणाय कृते समुद्यता भवन्ति । ग्रामायत्तसमितौ चाग्रिमयोजनायाः रूपरेखा विधीयते । विशेषतः साम्प्रतकालावसरेऽस्मिन् महोदयस्यागमनं जातम् । स्वागतसत्कारयोः समाप्तिर्यथा पश्चात् सभाकार्यवाही प्रारब्धा । अध्यक्षोऽजननताम् सम्बोधयन्नवोचत् । '*बन्धुवदश भूयाः वयं समाजमुखस्य शत्रुर्भासा स्म,* किन्तु तत्राशिक्षितमस्माभिर्बद्धम् । अस्माकं गान्धियस्यान्दवीपो विभाति । पूज्यबापूमार्गमदर्शयत् । तेनगमनमस्माकमेव कार्यम् । सर्वैर्ज्ञातमस्ति यदस्मिन्नादर्शग्रामेऽद्यापि सवर्णानां हृदयपरिवर्तनं नो जातमस्ति । कूपदेवालयेष्वस्पृश्यानामारोहणं निषिद्धम् । भेदभावश्चनीतिरत्र तोषयन् । सर्वेऽपि सार्वजनिकस्थानानामुपयोगं कर्तुं शक्नुवन्ति । तत्रवस्थापितवर्गविशेषस्य नास्तिकोऽप्यधिकारः । इदं सत्यमस्ति, किन्तु सर्वाणि कार्याणि विधेयकद्वारायामेव भवितुं नार्हन्ति । आवश्यकतास्ति यद्वयं समयस्यगतिपरख्याम । तदनुसारं च व्यवहरेम । अस्पृश्यतानिवारणं परमावश्यकं विधेयमास्ते । क्रूरं सवर्णा महापवर्णा अपि प्रभवेयुरारोढुम् । यदि साधारणोऽस्मिन्-विषये एव स्वहस्तिका भवमनहि राष्ट्रस्याग्रिमप्रगतौ कष्टयोगं दातुं क्षमा सन्नद्धं नहि । सत्र न प्रतिज्ञां कुर्वन्तु । अस्य पावनपर्वणि शपथं च आत्मशुद्धेरभावमपि विदधतु । "वयं परस्परभेदभावनां त्यक्ष्याम । अस्मासु सवर्णासवर्णयोर्वापि विभाजितरेखा नो स्थास्यति ।"

100933

समापनेऽत्र पूनर्भाषणस्योपस्थितजनतायामैन्द्रजालिकः प्रभाव पतितः । सर्वेऽस्तोच्छ्वाय प्रतिज्ञानबन्न ग्रामप्रतिनिधिः पं० कृष्णचन्द्र आश्वासनं ददौ । वयमस्पृश्यतामवश्यमपाकरिष्याम । विश्वसन्तु ग्रामेऽत्र कोऽपि अस्पृश्यो नामतामस्थित्यति ।

स्वामिन् । देशस्य सर्वथा सशक्ता कर्णधारा । तं शास्त्रविरोधं कर्त्तुं न पार्यते, किन्तु तेषां प्रसारणां कर्त्तुं शक्यते । तेषामकालिकमरिष्टप्रवाहं इच्छयन्ति सन्ति च । तत्र निमज्जनं नोह्निकम् । उन्मज्जनमेववरम् । विद्यालयभवनस्य,गोचरभूमेः, कूपजीर्णोद्धारस्य, पञ्चायतनभवनस्य कृते आर्थिकसहायता त एव ददति । तान्देवानाप्रियान् विधायप्रवञ्चनं कृष्णचन्द्रस्यैवकार्यमास्ते । यदि भवन्त साहाय्यमाचरिष्यन्ति, तदा तेषामत्र चरणाधानमेव नो सम्पत्स्यते । द्विदलञ्चलोपक्ष्यते । अस्पृश्यास्तु अस्पृश्या एवोन्यन्ना तथैवाजन्म भविष्यन्ति । अस्माकं स्वधर्मः प्राणप्रियः । तं केनापि मूल्येन विक्रेतुं नाभिलषाम । शास्त्रपुराणानामाज्ञा शिरोधार्यावर्तते । तेषामुद्धारं वयमपि कामयिष्याम । प्रतिज्ञास्तुकर्त्तुं मन भवन्ति । सर्थैवनिपन्ने । कर्त्तुं तदेव भविष्यति यद्वयमभिलषाम । इमेवराका विश्वसन्ति यत्समाजसुधारो भवति । अयम् कर्मलाभवो यावन्नागच्छति, सदाग्रेगिष्यामिष्यति ।"

कृष्णचन्द्रस्यस्पष्टीकरणेन सर्वेप्रमोदमापु । तस्य प्रत्युत्पन्नमतित्वं च प्रशसन्ति स्म । कूटनीतेर्लोहममन्यन्त । इमे चत्वारः पुरुषा एव ग्रामस्यप्रधानपुरुषा अभवन् । तेषामेव करणेन ग्रामस्य सर्वं कार्यप्रचलति । ते प्रत्यजानन् । वयं कदापि धर्मविरुद्धं कार्यंनाचरिष्याम । इत्थं तदैव पलाशस्य पत्रत्रयमवस्थितम् ।

कृष्णचन्द्रः स्वकीयमेकाकिन पुत्रं दयाराम पाठयितुं कामपिन्यूनता नोविहितवान । यत्किमपि पञ्चायतनकर्मणि वकतृत्वोपार्जितं तत्सर्वं तदध्ययने विनियोजितम् । हस्तलाघवक्रियायामासीत्सपद्धतम । आयं पूर्णं आसीत् दयारामस्य विद्याभ्यासं पूर्णतामगतोऽभवन् । तेन समाजशास्त्रे स्नातकोत्तर प्रमाणपत्रमासादितम् । तस्य विचारे परमोत्तमनागीत् । स पितुः विरुद्धमेव विचारसरक्षत तत्र समाजवादि विचारधारायां गभीरं रसः आसीत् । अत्रविषये पाश्चात्यविदुषां विचारमपि स आरभमान् कृतवानासीत् तद विषये शोधप्रबन्धं विधाय "विद्यावाचस्पति" विद्यामुपाधिमासादितवान् । कृष्णचन्द्रस्यमहती चाशासीत् यद्राजकीयसेवामुरीकृत्य मम वार्धक्यस्यावलम्बनं भविष्यति । तेन तदर्थं देवतादेव्योऽपि मानिता व्रत माचरितम् । परमानवानां सर्वा मनकामना नुत पूर्यन्ते ।

दयाराम सत्यसमाजसेवको भूत्वा पितृकृतस्य पापस्य प्रायश्चित्तं कर्त्तुमिच्छति । नगरेस्थित स समाजसुधारदिशि पूर्णरूपेण प्रसिद्धः जातः, किन्तु ग्रामीणा तत्स्वरूपं नाजानन् । कृष्णचन्द्रस्यापि ज्ञानं नासीत् यत्तदाशयाः एकमात्र केन्द्रीभूतोदयाराम तस्मिन् दया नो करिष्यते ।

कृष्णचन्द्रस्य निष्ठुरनीतिं प्रति अभिमानमासीत्। स पञ्चवर्षमेव सफलतां मन्यते स्म। समाजसुधारस्य नाम्ना विपुलधनं ग्रामनाशनीयते। चतुर्णामपि सहयोगेन तदात्मसात्करोति। तद्विपरीतं वक्तुं कस्य क्षमता? यदा मेघसिंहो विरोधमाचरति, तदा तस्य मारणस्य गुप्तपत्रं प्रेष्यते। परं सत्याग्रही कस्माद् बिभेति? मेघसिंहः स्वसिद्धान्ते एकमात्र आसीत्। येन कृष्णचन्द्रः स्वापमानं निश्चिनोति। विरुद्धास्पृश्यानां कृते जलनिषेधाय तत्परोऽजायत। यदा ग्रामस्य घटपूर्णे, तदा स्वमनेन स मेघसिंहं पराजेतुमियेष। स मन्यते सवर्णाः तत्पक्षपातिन आसन्। केवलो दयारामस्तस्यानुयायी नासीत। तथापि तु प्रयत्नो जातः। सफलता न मासिता। स निर्भयवादी सामाजिक कार्यकर्त्ता अभवत्। स मेघसिंहस्य पक्षं जग्राह। तत्र हस्तक्षेपः जातः। नवीनतमनृशंसत्वम्। दयारामस्य निर्देशानुसारं कूपाज्जलमादातुं निश्चयो जातोऽस्पृश्यानाम्। क्रियमाणं किं करोति? ते सपर्याय सन्नद्धा अजायन्त। मेघसिंहदयारामयोर्नेतृत्वे तत्समुदाय कूपे समुपस्थितः। यत् पूर्वतएव कृष्णचन्द्रस्य मल्ला आयुधैः परिवृत्ता विद्यमाना आसन्। अतः कुन्ता यष्टयः सर्वाणि अस्त्रशस्त्राणि तदन्तिके व्यराजन्त। मन्ये तस्यापि भयानकं युद्धस्य पूर्वाभ्यासोऽभवत्।

विलोक्य दयारामो वस्तुस्थितिं परिचिनोति। सगर्जनमवोचत्— "भवतामयमन्यायोऽधुना नो चलिष्यति। युगपरिवर्तनं जातम्। समयानुसारं भवतामपि परिवर्तनमपेक्षितमास्ते। सावधाना भवन्तु। अत्याचारस्य युगाय क स्पृहयति। यानस्य युगस्य प्रयोगेनासमञ्जसमेव जनिष्यते। सर्वोऽपि ग्रामो रक्तिसादं गमिष्यति। अस्माकं प्रगतिः सर्वथावरुद्धा जनिष्यते। वायुस्वप्नं साकारो नो सम्पत्स्यते। अन्यत्र क्षिपन्त्वस्त्राणि। कूपमुद्घाटयत सर्वासवर्णेभ्यः। पशुता नैव श्रेयस्करी भवति। अन्यथा विनाशकारिणी यानपरम्परा प्रवर्तिष्यते।"

स्तम्भान्तरिक्षं चकम्पे। मन्ये मेदिनी चचाल। दयारामस्य निवेदनं व्यर्थं जातम्। धर्मध्वजिनः प्रलयं कर्तुं कटिबद्धाः। कृष्णचन्द्रस्य मौनं सङ्केतमाप्य तज्जना निर्दयं प्रहर्तुं तत्परा आसन्। अनवद्यो यष्टिप्रहारो नर्तते। नृशंसतायाः नग्नताण्डवं प्रवृत्तम्। एकत्र हिंसा परत्राहिंसा। एकत्र शस्त्राणि परत्र रिक्तहस्तता। अस्ति कीदृशं वैपरीत्यम्?? पश्यतामेव तामसी वृत्तिरारब्धा। सर्वे परस्परं रुधिरस्य पिपासवो जाताः। मिथो हस्ताहस्ति, दण्डादण्डि, केशाकेशि, मुष्टामुष्टि प्रहरणं प्रवृत्तम्। दयारामो मेघसिंहश्च साघातिकाऽऽहतिर्जाता। अन्येऽपि बहव आहताः। दूरस्थितः कृष्णचन्द्रः स्वनीत्या स्मयमान आसीत्। आज्ञानिनोऽत्याचारिण यत् किमपि कुर्युः तत्सर्वं स्वल्पमेव। सत्याग्रहिणामुपरि चेत्थं शस्त्राक्रमणमैतिहासिक-

पुनरावृत्तिरासीत् । यो यो कूपमारोहत् तस्य तस्य कपालक्रिया विहिता । पश्यतामेव कूपप्रकोष्ठशीतलजलं तप्तरक्तरञ्जितं जातम् ।

यदानुयायिनोदयारामं मेघसिंहं च न्यभालयन्, तदा तयोर्जीवशुकः कायपिञ्जरादुदपतत् तयोर्निर्ममबलिदानं जातमिति सर्वैर्निरीक्षितम् । सहसा चीत्कारोऽजनि । आक्रन्दनमयमयनाया साम्राज्यं व्याप्तम् । दलद्वयस्याश्रुधाराभिः तत्र त्रिवेणीदृश्यमनुपश्यितम् । अघटितघटनापटीयसी प्रकृतिरिति जनैरनुभूतम् । अद्यावधि यन्न भूतं तदेव जातम् ।

पुत्रशोकेन कृष्णचन्द्रस्यापि हृदयगतिरवरुद्धा । तथा सोऽपि पञ्चत्वमगात् । त्रयाणामेकस्यां चितायां दाहसंस्कारो धार्म्यः कृतः । सर्वेषां नेत्राणि सजलान्यासन् । वसतिनिवासिभिः स्तोपः स्मारकं निर्मितम् यत्कूपाद् जलमानेतुमागतान् बलिदानस्य मूककथां कथयति । इति दिक् ।



# दिग्–भ्रमः

कलानाथ शास्त्री निदेशक भाषा विभाग,जयपुर

धूमशकटि[1] प्रतीक्षागले[2] शीत समधिकमासीत् गिरीशेन सकृत् प्रकोष्ठबद्धा[3] घटिका दिदृक्षिता, किन्तु नातिन्योमे तमसि न सा दृष्टिगोचरा भवत् । निशीथस्य समयोऽस्ति लघुतर चेद धूमशकटिस्थलम्, विद्युत्प्रकाशस्य तावती व्यापक व्यवस्था कथं सुलभा स्यादत्र ? गिरीशेन चिन्तितम । तथापि समग्र दृश्य विलोक्य तेनाऽनुमित यद्धूमशकटेरागमने न्यूनान्यूनम् एकाहोरा त्ववशिष्यत एव । तदैव पुनर्मीलकमिव दृश्यते । यदाकदा कर्मकराणा धूतकायदीपिकाभा पादत्राणध्वनि सुदूर श्रूयते विलीयते च । द्वित्रा यात्रिणो धूमशकटि प्रतीक्षमाणा प्रतीक्षागऐन सहैव संश्लिष्टे यात्रिविश्रामकक्षे[4] गिरीशेन सहैव वेत्रासन्दीषु[5] समुपविष्टा ।

अवकाशदिनेषु स्वगृहात् प्रत्यागतस्य गिरीशस्य सर्वोऽपि समय कियत् त्वरित व्यतियात !! श्व पुनरपि विश्वविद्यालये कक्षासु गन्तव्य स्यात् । तान्येव पुस्तकानि, काव्यप्रकाश, तुलनात्मक भाषाविज्ञानम्, भारतीयदर्शनम् भवभूति, मृच्छकटिकम् । संस्कृतविभागस्य प्राध्यापका:, केचन प्राचीनपद्धत्यनुयायिन, अपरे नितरामाधुनिका, एवमेव छात्रा, कतिपये पुराणपद्धतिप्रिया, धौतवस्त्रसाधारणकंचुकनिचिता, अपरे तु पाश्चात्य वस्त्रवेष्टिता आधुनिका । संस्कृतविषयस्य स्नातकोत्तरकक्षा एव विधा एव भवन्ति संमिश्रा । यथा हि छात्राध्यापकादीनामाचार विचारेषु संमिश्रता दृश्यते तथा कक्षास्वपि संमिश्रता प्रकटा-युवकाश्च युवत्यश्च सर्वे स्नातकोत्तरकक्षासु अधीयते । स्नातककक्षासु पुरुषमहिलाना पृथक् पृथक् महाविद्यालया भवन्तु नाम । भगवत्कृपया छात्रावासा मात्र भवन्ति संमिश्रा. । कन्याछात्रावास पृथगस्ति, काम भवतु स विश्वविद्यालय-परिसरे

---

१ धूमशकटि ट्रेन इत्याङ्गलभाषायाम् । २. प्लेटफार्म, ( रेलवे प्लेटफार्म ) इत्याङ्गलभाषायाम् । ३ प्रकोष्ठे बद्धा घटिका रिस्ट वाच इत्याङ्गलभाषायाम् । ४. मुसाफिरखाना इति भाषायाम् । ५. बेंच इत्याङ्गलभाषायाम् ।

एव । गिरीशेन चिन्तितं यद्यदि विदेशेष्विव समियाश्छात्रावासा अभविष्यंस्तर्हि मनोज-नवनीतमट्टशास्तस्य रसिका सहपाठिनस्तु सर्वमपि दिवस सहपाठिनीना कक्षेष्वेव व्यतियापयितु मचेष्टिष्यन्त । नाय्यं प्रयत्नापि बोद्धुमपारयद् यत् स्वाध्याये समय न प्रदाय किमिति मनोजो नवनीतश्च कन्याछात्रावासस्याधो भ्रमणे प्रभूत समय यापयत ? किमिति तावदवकाशदिवसेषु नूतनानि वस्त्राणि परिधाय स्वकीयाऽभ्यास-पुस्तिकानामादानप्रदानमिषेण[1] कदाचिदनितायाः, कदाचिच्च सुधायाः प्रकोष्ठे यातु कन्याछात्रावासप्रतीहारेण सह सख्यमापादयत ?

तस्य तु मनसि न कदापि तादृशी समुदिताऽऽशा । सोऽयं सुरुचिरदर्शनो, युवा, बुद्धिमान्, विश्वविद्यालय प्राप्तप्रगमोऽप्यस्ति उच्चश्रेण्या सर्वदैवोत्तीर्णो भवतीति सर्वे तस्मै स्निह्यन्त्यपि, किन्तु न तेन कदाप्यभीष्टं यदेवविधेषुरसिकेषु निरर्थकेषु व्यासगेषु समय व्यतियापयेदिति । कुतो न स्यादेवम् ? तस्य परिवार एव तादृश सदाचारपरम्परानुयायी, लब्धप्रतिष्ठश्च । भवतु स नाम ग्रामवासी, किन्तु किं ग्राम तस्य परिवारो न सुशिक्षितो न वा मूर्धन्य स्थानमधितिष्ठति ? ग्रामवासित्वे सत्यपि किं स निर्गतोच्चया नागरिकसभ्यताऽनभिज्ञ ? किं स न जाना-त्याङ्गली भाषाम् ? अथवा किं स न वे याधुनिकानाऽऽचारान् ? स्वग्रामे, यत्र हि स समादृत स्थान धारयति, स बहुधा कार्यपालकपदेषु निर्वाचितोऽपि । किन्तु न तेन कदाऽपि स्वाध्यायमतिरिच्यान्यस्मिन् कस्मिंश्चन व्यतिकरेऽधिक समयो यापित । इतस्तु तस्यैव छात्रावासस्याऽऽस्वामिनस्तस्य सहाध्यायिनो मनो॰ नवनीताऽद्ययोऽध्ययने स्वल्प, सामाजिक सबधस्थापने च समधिक समय प्रददति ।

अस्मिन्नेव शीतावकाशे गृहान् प्रत्यागत स धर्मभारोण पित्रा सगाम्भीर्य पृष्टोऽभूदिति सहसा तस्य स्मृतावागच्छन् । सप्ताहोऽपि तु नातीत, किमिति न स्मरेत्सर्वं सुस्पष्टम् ?

"गिरीश किं चिन्तित त्वया कदापि विवाहविषये ? अचिरादेव त्व स्नातकोत्तरपरीक्षोत्तीर्णो भवितासि । तदनन्तर तु विवाहो न भवेदत्राविलम्ब ? किन्तु कश्चन ममशील परिवारस्तु पूर्वम् एव निर्धारितो भर्वाचयनदर्थं मया दृष्टचर एव परिवार । कन्यका सुशीला, सुशिक्षिता च । स्नातिका तु पूर्वम् एवा-ऽस्ति, सुदर्शना सेय कन्या न तिष्ठेदविवाहिता चिरकालाय । अतो यावदन्य कश्चन वरो निर्वाच्येत तत्पूर्वमेव यदि वय स्वीकृति दद्याम तर्हि ते वराका निश्चिन्ता

---

१ नोट बुक इत्याङ्गलभाषायाम् ।

स्यु'। कतिपया तु पत्राणि तैः प्रेषितानि। त्वन्माता तु वन्ध्या दृष्टवत्यपि। त्वं वाञ्छसि तर्हि पश्य ता त्वमपि !" उक्तं पित्रा।

"नैव तादृशं किमपि। पञ्चपवर्षाणि तु चर्चाऽपि न विवाहस्य।"
तेन साटोपं स्वन्तिमुत्तरितमासीत्

मध्य एव मातोक्तवती" किन्तु पूर्वं निश्चयो, वाग्दानं वा भवत्विप्यत्र का तै विप्रतिपत्तिः ? भवतु विवाहः पञ्चवर्षानन्तरमेव। कन्यापक्षीया अपि न त्वरन्ते तावत्तु। "

'भवतु नः किमपि, किन्तु वाग्दानादेरपि चर्चा ममाध्ययने विघ्नायेत। लिख्यतां कन्यापक्षीयेभ्यो यदन्यं कञ्चन वरं कृतार्थयन्तु ते।" सधाष्टर्यमनेन पुनरुत्तरितम्। एतदुपरि विद्यावता, प्रकाममनुभववता च पित्रा भूयान् वैचारिको विमर्शस्तेन सह कृतोऽभूत्। पाश्चात्यमनस्तत्त्वज्ञ फ्रायड-एडलरप्रभृतयोऽपि मध्ये समानीताः, याज्ञवल्क्यमन्वादयोऽपि, वर्णाश्रमव्यवस्थाऽपि सुभृशं विचारिता, समधिकसमयमविवाहितस्तिष्ठन् न किं चन विशिष्टं प्रयोजनं साधयति कश्चिदिति जनकेन साधयितुमिष्टं तद्विपरीतं गिरीशस्तु ब्रह्मचर्याश्रमस्याधारं सतर्कं प्रतिष्ठापयन्वदायिको, मानसिकः शारीरश्च विकासो न भवति पूर्णो, यावत्पञ्चविंशति विद्याध्ययनं न सम्पद्येत, तावत्तादृशी चर्चाऽप्यहितकरी स्यादित्यादि सहेतुकं प्रतिपादयितुमैच्छत्। सुतस्य तार्किकाभिव्यक्तिकौशलं मनस्येव प्रशंसताऽपि पित्रा प्रकटं केवलमिदमेवोक्तं "सर्वं सदहमपि मन्ये, किन्तु प्राचीनानामाश्रमाणां युगं तद्व्यतियातम्। चलचित्राणामिदं युगम्। अद्य हि प्राप्तकैशोर्याः, प्राप्तयौवना वा बालकाः ऋष्यशृङ्गा इव तिष्ठेयुरित्यसम्भवम्। बहव्यो मेनका विश्वामित्राणां कृतेऽभिप्रायन्ते। किन्तु त्वं नाधुना ता चर्चां रोचयसि चेत्तिष्ठतु तदिदमग्रिम ग्रीष्मावकाशं यावत्।"

सहसैव तीव्रो धूमशकटिक् शब्दकाशो[1] गिरीशस्य स्मृतिसमाधिं भङ्गमकरोत्, परिधानपिटकमादाय[2] त्वरितमसाववतिष्ठत्। आयाता धूमशकटिः।

× × × × ×

(२)

'शाकुन्तल'- नाटकमञ्चनस्य पूर्वाभ्यासानां दशमोऽद्य दिवसः, किन्त्वद्य यावान् विलम्बः समजायत, न तावान् पूर्वं कदाप्यभूत्। रात्रिरेव सङ्क्रान्ता।

---

१. हैडलाइट। २ सूटकेस इत्याङ्लभाषायाम्।

प्रकोष्ठवृद्ध' घटिका बीतर समावेशन गिरीश । सार्धपिटवादनम् कथ समयस्य निर्णयो नाभ । समयनाशस्य नैरर्थक्यमिदं तेन तदा पर्यनुभूतमासीद् यदा 'शाकुन्तलस्य मचनमस्मिन् नायिकाधिवेशने भवत्विति विनिश्चित्य विभागाध्यक्षेण नाटकस्यास्य मचोपयुक्त रूपान्तरण विधाय तदभिनेयस्य सम्पादनभारो गिरीशोपरि निक्षिप्त त सहायकत्वेन च सुधा समनुरुद्धा. तत्प्रसगेन च साप्ताहादधिकोऽवधि शाकुन्तलस्याऽऽलेखसम्पादने व्यनीत किन्तु न जानात्यसौ कि तत्कारणमभूद्येन प्रेरितोऽत्र सप्ताहावधि भृश परिश्रम्य आलेखममु पूर्णमकरोदेव । सुधायाऽपि तु भूयान् परिश्रमो विहित । सा वराकी सकोच विहाय बालकाना छात्रावासे, तस्य कक्षे प्रत्यह समागत्य दिवस होरापर्यन्तमस्थात्, तस्य च श्रुतिलेखमलिखत्, त्वरित लिखित्वाऽपि मौक्तिकवत्सुन्दरैरक्षरै सर्वोऽप्यालेखस्तया सपादित इति दृष्ट्वा चकितोऽभवद् गिरीश । निभृतमलज्जत स, तेन हि पुरुषदम्भाभिभूतेन न कदाप्यनुमितमासिद् यन्महिला अपि तावत्सुन्दर, त्वरित च लिखितु क्षमा स्यु । न केवल सुन्दरमेव, शुद्धमपि । सुधाया व्याकरणज्ञानमवबुध्यापि तु गिरीशश्चकित एवाऽभूत् ॥ असकृत्तया, विनम्रतापूर्वक गिरीश प्रतिबोधित पाणिनीयव्याकरणानुरूप प्रयोग परिवर्तयतुम् । कालिदासीयाना समस्ताना[1] प्राचीनपरिवेशोपयुक्ताना च वाक्याना नवीनेषु साम्प्रतिकपरिवेशोपयुक्तेषु च वाक्येषु रूपान्तरण कार्यमित्यस्येच्छाऽभूत् । किन्तु स्वल्पमपि व्याकरणस्खलन सुधा त्वरितमेव सूचयतीति पश्यता तेन शनै शनै कालीदासीयशब्दानामेवाधिकाधिक तथैव स्थापन समारब्धमभूत् ।

किन्तु न कदापि दम्भस्य, घमण्डस्य वा लेशमपि सुधा प्रदर्शितवतीति स साश्चर्यमस्मरत् कथ सलज्जया तया श्रोक्तमासीदेकदा— "भवान्तु कन्याछात्रावास नाऽऽगच्छेदेवेत्यह जानामि । अत एव सकोच विहायाहमेव भवच्छात्रावासे समागच्छमेतावन्ति दिनानि । अन्यथा लेखो नाऽभविष्यत पूर्ण, प्राध्यापकमहोदयाश्च मामेवापराधिनी प्राख्यापयिष्यन् 'स्त्रीशूद्रद्विजबन्धुना त्रयी न श्रुतिगोचरा', इत्यादिना वय महिला एवाज्ञानदोषभाज । किन्तु अद्याऽऽलेखस्य समय-परीक्षणाय । यदि भवान् मत्प्रकोष्ठे समायातु कष्ट विदध्यात्तर्हि महत्सौविध्य मे भवेत् । आलेखो मन्ये होरात्रय ग्रहीष्यति, एतावन्त च समय नाऽह परत्र स्थातु शक्नोमि ।"

लज्जया, पश्चात्तापेन च गिरीशस्तारतम्यमनुभूय विलय इव सवृत्त । सक्षमाप्रार्थनमय त्वरित कन्याछात्रावास गन्तुमन्वमन्यत । सुधाया आनीय, सुशाभा

---

1. समासघटितानामित्यर्थ ।

बुद्धि, विनय च दृष्ट्वा निहृस्तोऽसौ सवृत्त । मन्ये तदिदमेव कारणमभूद् यदनेन नाट्यप्रयोगे दुष्यन्तस्य भूमिकामपि कर्तुमनुमत, यदाऽऽत्मवजानात् यच्छकु‍न्तलाया भूमिका सुधा निर्वहेदिति । ततश्च पूर्वाभ्यासेषु मूलत समयमतिराह्य सर्वैरेवासौ समयनाशपश्चात्तापाकुलो भवति स्म, किन्तु नायमजानात्कीदृशी सा प्रेरणाऽभूद्यया साय पञ्चवादनसमकालमेवास्य पादौ विश्वविद्यालयप्रेक्षागृह प्रति स्वत एव जिगमिषु सम भवताम् । वार्षिकोत्सवानन्तरमय सर्व तदिद नाटकमचनादिक विहाय केवलमध्ययने एव समय प्रदास्यतीति सुदृढ निश्चितमनेन । मनोज-नवनीतादयस्तु नाटक पूर्वाभ्यासेषु कियन्त रसमगृह्णन्निति स पश्यति स्म उपहसति स्म च तान् मनस्येव । एवविधास्तथाकथित-सामाजिकाश्छात्रा सर्वदैव तेनोपहसिता अभूवन् । स स्वसहृदमु प्रययो धयन् 'सखे गिरीश, तपोवनस्य ऋषिकुलस्य वा पुस्तककीटायितश्छात्रास्त्व कि जानीया जीवने कीदृशो रसो भवतीति । अरे कुमारसभवस्य भामिनीविलासस्य च पाठका भूत्वाऽपि यदि वय खदिरवृक्षवद् शुष्का स्याम तर्हि धिगस्माक साहित्यपठनम् ।।' एव च सर्वदैवैतान् समुपादिशत्-' वन्धव स्वपित्रो समधिक द्रव्य स्वस्वसपुटेष्वादाय छात्रावासाना जीवन रसयन्तो वय न जानीमो यदाधुनिकजीवने कियत्य प्रतियोगिता अस्माभिर्योद्धव्या इति । यत्र हि प्रतियोगितायुगम । विश्वविद्यालये प्राथम्य वा, समधिकानकान् वा यदि वय न लभामहे, भूत्यर्थं च द्वाराद्द्वारमाहिण्डन कर्तव्य भवेत्तदा कुमारसभवो, भामिनीविलासश्च न भोजनमस्मभ्य प्रदास्यत । अस्माक नियोक्ता नेद प्रक्ष्यति यद् भवता कस्य कतिकन्याभि सहास्ति, स भवतामकतालिकामेव द्रक्ष्यति । " इत्यादि ।

परन्तु प्राथम्य लब्धवान् गभीर समादरणीयश्च छात्रोऽयमभूदिति सर्वे तस्य गौरव रक्षन्ति स्म । ततश्च तथाविधा रसिका सहपाठिनो नैन प्रकटमुपाहसन्, किन्त्वनेन ज्ञातमासीद् यत्तैस्तस्य नाम "नैयायिक" इति रक्षितमभूत । पर्यन्ते तदिदमपि तेन ज्ञातमासीद्यन्नैयायिकत्व तस्मिन् केन कारणेनाऽऽरोपितमभूत् । यथा नाट्यगृहे सहृदयास्तु रसनिष्पत्तिमधिगच्छन्ति, 'नैयायिकस्तु रसा सर्वेभ्यकुड्यायमन्ति भा" न निषिद्धयन्ति, तथैवाय जीवनरगमचे 'नैयायिक" एवाऽभूदिति तद्यौचित्यमेभिर्दत्तमभूत् । सर्वमिद ज्ञात्वा विनोदमेवाऽन्वभवत, न कदाप्यकुप्यत्, यतो न तेनाऽऽत्मनि सहृदयत्वभाव कदाप्यनुभूत ।

किन्तु नाटकस्य पूर्वाभ्यासेरस्य मानसेऽज्ञात किचनाऽऽन्तरिक परिवर्तनमिव

---

१. आलेख वाचयित्वा, कियत समयमय ग्रहीष्यतीति समयनिर्धारणमिति यावत् ।

विज्ञीयते इत्याशङ्कते स्मायम्। क्षणेनैव चाऽशङ्कामिमां दूरमक्षिपदसौ। कथं तदिदं सम्भवति ? शकुन्तलोऽनौ व्यासङ्ग, मुद्रीवंपरिश्रमानन्तरं विश्रामवन्मनोविनोदोऽयं कां वा हानि सम्पादयेत् ? नाऽभूत् तत्र कामपि हानिरन्वभवन्। सुधाऽपि तु प्रथमश्रेणिका छात्रैवाऽभूत्। साऽपि तु नाटकेऽस्मिन् भूयांसं समयं यापयति। साऽपि गभीरा, समादृता च छात्राऽस्ति। द्वयोस्तथाविधं साम्यं सुस्पष्टमेव। तर्हि सायङ्कालीने होराद्वये पूर्वाभ्यासैर्व्यतियापिते को वा दोषः समापतति ? सर्वमिममन्तर्द्वन्द्वं निरन्तरमन्वभवदसौ। किन्तु स्वकीये व्यवहारे पि तु ईषत्परिवर्तनमयमनुभवति किमिदम् ? यो हि गिरीशः अनितया, सुधया, अन्यया वा कयाचन सहपाठिन्याऽभ्यास-पुस्तिकां प्रदातुं, कस्यचन पुस्तकस्य नाम लेखितुं वा पृष्टोऽपि वाक्येनैकेनैवोत्तरमदात् सोऽधुना पूर्वाभ्याससमयेऽनितया, माधुर्या वाभिवादितः किमिति सस्मितमुत्तरं प्रददाति ? अनिता माधुरी च अनसूया-प्रियंवदयोर्भूमिके अस्मिन् नाटके निर्वाहयतः। किमिति सर्वा एताः स्वस्वभूमिकां शिक्षयन्नपि स प्रमोदमनुभवति। वयःपूर्वं श्रीमद्यायावरयुगस्य प्राचीनतां दृष्ट्वा किमित्यनेन नूतनोपानद्द्वयमिष्यते ? न केवलमिष्यते एव, पूर्वाभ्यासस्य तृतीये एव दिवसे क्रीतमप्यनेनोपानद्युगम्।

नाटकेऽस्मिन् नवनीतोऽप्येकां भूमिकां वहति, मनोजोऽपि। द्वावपि सुपरिचितौ युवानौ। सामाजिकौ, लोकप्रियौ चाऽपि। कन्याछात्रावासस्य सोपाने सह तयोर्यावान् परिचयस्तावान् नान्यस्य भवेत्। किन्तु द्वयोरप्यनयोर्वाणी न तावती गभीरा, उच्चारणं च न तावत्स्फुटमिति विभागाचार्येण गिरीश एव दुष्यन्तस्य भूमिकायै वृतोऽभूत्। पूर्वाभ्यासानां सञ्चालनस्य प्रभूतो भारोऽपि तेन गिरीशस्यैवोपरि प्रक्षिप्तः आलेखोऽपि तेनैव लिखितोऽभूदिति कृत्वा। नवयुगीना अनिता माधुरीमभृतयश्छात्राः प्राचीनपरिपाटीवादी पुस्तककीटस्यैवाऽस्य दुष्यन्तत्वेन चयने मन्ये निराशामनुभविष्यन्तीत्याशङ्कितमनेन। किन्तु किमिदं विपरीतं सञ्जातम् ? स दुष्यन्तत्वेन वृतः सोऽपि यथा सुधा प्रासीदत्, तत्तु प्रत्याशितमेवाभूत्, किन्तु नवयुगीनाः कन्यका अपि चयनेनानेन प्रासीदन्नेवेति तेन श्रुतम्। तदेव न जाने केन कारणेन, गिरीशः प्रस्तावितवान् यन्नवनीतः कण्वस्य, मनोजश्च विदूषकस्य भूमिकां निर्वहेदिति। स्वीकृतमेवेदं समनुमतमाचार्येण। किन्तु प्रस्तावस्यास्यान्तः कारणेष्यां तु नाऽभूत् ? नैव, नैव। किमिति स्यादेवम् ?

× × × × ×

(३)

माघीयशीतस्य निशीथे यदा प्रेक्षागृहाद् दम्पती. . . . . .

कृष प्रत्यावर्तमाना प्रभूतस्नेहा मधुरा सुधाऽऽर्द्रैव वाणी निरसरत् । 'दुष्यन्त-शकुन्तलयोर्भूमिके निर्वहता कलाकारद्वयेन तु चमत्कार एव कृतः । सजीव इव तैर्विहितः कालिदास ।' दर्शकेषु कुलपतिः, प्राध्यापकाः, सभावितानापरिकाः वरिष्ठा प्रशासकाः, पत्रकारा कलाकाराः सर्वेऽप्यासन् । कुलपतिना, प्रशासकैश्च विभागीयाचार्यं स्वप्रशंसा कलाकारयोः सकाशं प्रापयितुमनुरुद्धः किन्तु पत्रकारास्तु नेपथ्यान्तरेव प्राविशन् । सहस्तपीडनं तैर्गिरीशोऽभिनन्दितः । तदिदमनुमातुं सुशक-मासीद्यत् श्वस्तनेषु समाचारपत्रेषु गिरीशस्य मुक्तकण्ठं प्रशंसाना स्तम्भा दृश्यन्ते । केयूरमण्डितं बाहुरस्य सस्मितं सविनयं चाभिनन्दनानि स्वीकुर्वन्नासीत्, एकवेणीधरा, शुभ्रवस्त्रावृता स्वकीयमभिनन्द्य सौन्दर्यं द्विगुणमिव कृत्वा प्रसारयन्ती सुधाऽपि तेषा-मभिनन्दनानि विनयावनता भूत्वा स्वीकुर्वाणाऽभूत् । विभागीयाचार्यो हर्षगद्गदो भूत्वा समभ्यनन्द इवावपि । तत्रैव शैत्यापनोदनिपुणा चेतस्यपर्णी[1] उपपेया समायाता । आचार्येण, प्राध्यापकै, कलाकारैश्च तस्या रसास्वादो गृहीतः । न ज्ञातं, कतिवारं मतिदिक्ष्याकचक्य छायाचित्रग्राहकैस्तया[2] चित्राणि गृहीतानि, कति-पयैश्छात्रैस्तु तस्य स्मृतिहस्ताक्षराण्यपि[3] जिघृक्षितानि ।

अपूर्वं कश्चिदयमनुभवोऽभूद् गिरीशस्य । कतिधा विश्वविद्यालयीय-परीक्षास्वनेन प्राथम्यं लब्धमभूत् तदाऽपि जनानामभिनन्दनान्यमौ स्वीचकार, वादविवादप्रतियोगितासु प्राथम्यं लब्ध्वाऽप्यभिनन्दनान्यनेनार्जितान्यभूवन्, किन्त्वस्या रात्रेरभिनन्दनेषु कौतुकमभूद् वैलक्षण्यं यदनेन चायनपक्वं मधुचषकमिवानुभूतम् । केन कारणेनायमनेन साफल्यमिदं गरिमा सर्वमनुभूयत इति विचिन्तयितुमवसरोऽ-प्यनेन न लब्धो यतो नेनचन सूचितं यन्मस्तारकवाटि[4] कलाकारान् स्व-स्वगृहान् प्रापयितुं प्रतीक्षते । चायपानं समाप्य नगरस्थैश्छात्रावासीयैश्छात्रैर्गमनानुमति याचिता । छात्रावासा सर्वे निश्चेष्टा एवाऽभूवन् । अतः सुधा विहाय माधुरी, अनिलादयोऽन्याश्छात्राश्च तस्यामेव शकट्या प्रस्थिता । आचार्यादयोऽपि निरगमन् । मनोज-नवनीतादयः स्वकीयैर्द्विचक्रैर्निर्गता भवेयुरिति सर्वे जानन्ति स्म । दुष्यन्त शकुन्तलादिनायकयोः कृतेऽभिनन्दनानां पूरः इयानभूद्यत् ताभ्यां स्ववेषापतारणाय समय एव न लब्धोऽभूत् । अतः शीघ्रं नाट्यवेषावतारणमाभ्यामारब्धम् । स्व-स्व परिधानानि परिधाय यदा तौ बहिरागतौ तदा मञ्चप्रबन्धका विद्युत प्रवाहादयुपसंहारे संलग्ना अभूवन् । प्रेक्षागृहाद् बहिरागत्य द्वाभ्यामपि परस्परं दृष्टिपातं कृत-

---

१ चाय इति भाषा । २ फोटोग्राफर इत्याङ्लभाषायाम् ।
३ आटोग्राफ इत्याङ्लभाषायाम ४. मोटर कार इत्याङ्लभाषायाम् ।

किन्तु नैकेनाप्यपरोऽभिनन्दित । मनसि परस्परमभिनन्दनप्रदानस्य सत्यामपि तीव्रायामाकांक्षायां किमित्येनयोर्वैखरी नाव प्रसृतेति नैवाऽप्यजानात् विचित्रा समभवद् द्वयोरपि मन स्थिति । गिरीशेन स्पष्टमनुभूत यत्साफल्येऽस्मिन् सुधाया साहचर्यस्यापि वर्तते कश्चन भाग: । किं तदिदमेव साऽप्यनु भवति ?

"सर्वे गता । शीत च प्रबलम् । अह भवती छात्रावास प्रापयामि, सन परावर्तिष्ये ।" गिरीशेनोक्तम् । गिरीशस्य छात्रावासः पूर्वमागच्छति स्म, तदनन्तर कन्याछात्रावासोऽभूत् ।

"चायपानमेतावदभूद् यत्तत्र गत्वा निद्राऽऽगमिष्यति इत्यत्र सन्देह एव ।" स्मयमानमुखाम्बुजया सुधयोक्तम् । द्वावपि स्फुटमहमतामेतदुपरि ।

"अद्यतनी सफलता भवतीमेवाधारीकुरुते इत्यहमनुभवामि । सर्वोऽप्यालेखो भवत्या नायिकाया प्रमुखो भूमिका भवत्या . " गिरीशेन वक्तुमारब्धम् ।

"अहो विनय । आलेखे किममुष्मदीयम् ? भवता तु सर्वं लेखितमासीत् ।"

"समग्रमपि नगर श्वो भवत्या प्रशसाया व्याप्तृत स्यात् । पत्रकाराणा प्रतिक्रियया किं भवती नानुमाति ?" गिरीशेन किंचिन्निकटमागत्य कर्णान्तिकमिव जल्पितम् ।

"प्रथम तु प्रशसा भवत एव स्यात् । भवतामभिनय वीक्ष्य तु मयाऽप्यात्मा विस्मृतोऽभूत् । यदि मदीया काचन प्रशसाऽपि भवेत्तर्हि तस्यामपि भावत्कीमेव प्रशसामह द्रक्ष्यामि ।"

"किमिति ?"

"यतो हि मदीयायां भूमिकायामपि प्रतिवाक्य भवतामेव तु मार्गदर्शन-मासीत् ।

द्वाभ्यामप्यनुभूत यत्स्वल्पीयानपि छात्रावासपर्यन्तो मार्गं कियान् प्रलम्ब सन् भूद्यत्तयोर्वार्तालाप समाप्तिमेव नायाति स्म । वार्तालापेऽस्मिन्ननुभूतपूर्वो मधुरिमा कथमनुभूयते स्मेति द्वाभ्यामपि ज्ञात न वेति न वक्तु पार्यते ।

कन्याछात्रावासस्य प्रमुखद्वाराद् बहिर्वेत्रासन्दी पतिताऽभूत । किंचन कालमेव गिरीशस्तदुपरि निषण्णोऽभूत् । 'किं भवानद्योपवेक्ष्यति ?" सुधया साऽऽश्चर्यं पृष्टम् ।

"क्षणमत्रोपविश्य चिन्तयितुं वाञ्छामि कथं तदिदं सर्वं समजातम् ?"

"किं सर्वम् ?"

"मा पृच्छ तत् । क्षणं चिन्तयामि तदा वक्ष्यामि, न जाने किमिति" तादृशमद्भुतमुत्तरं गिरीशः प्रादात् ।

"चिन्तय, तदा वद । अहमप्यत्रैव तिष्ठामि तावत्" परिहासपूर्वकं सर्वदा सहज-गम्भीरयाऽनया छात्रया समुत्तरितम् तत्रैव च स्थितवती । किमिदमभूत् येन निशीथे तस्मिन् शीतस्य प्रकोपे नैतयोः कतरोऽप्यन्वभवत् ? मन्ये तदिदमपि कतिपयक्षणानन्तरं ताभ्यां नानुभूतं स्याद्यत्तो विपालपत्र इति । तस्मिन् परिवेशे तदिदं तु वयमनुभूतं भवेद् यत्कश्चन तौ तत्र स्थितौ पश्यन्नपि स्यात् ॥ किन्तु हन्त । किमिदम् ? होरार्धानन्तरं ताभ्यामनुभूतं यत्सम्मुखमेव प्रलम्बतरुपङ्क्तेः पृष्ठतोऽन्धकारे कश्चन जनः शनैः शनैरपसरति । द्वाभ्यामपि सावधानं दृष्ट्वा प्रयतितमनेकशः, न द्वावपि तु तयोः जनः अनुमितौ । गिरीशेन शनैःशनैः गात्रयष्ट्या चानुमितं यत्सोऽयमंशो नवनीतः स्यात्, अपरो मनोजः तृतीयश्च राजपाल इवानुमितः । छात्रावासस्थेमे छात्रा निशीथेऽस्मिन्नत्र किं कुर्वन्ति ? अस्मिन् शीतेऽत्र किमिति समायाताः । किन्तु तावता कालेन सुदूरं प्रयातास्ते सर्वेऽपि । ततश्च किमिदम् ? सुदूरादेव सम्मिलितस्याट्टहासस्य ध्वनिः कथं श्रूयते ? पुनरप्येकोऽट्टहासः ।। अधुना तु सुनिश्चितमेव यदेते त एव छात्रावासीयाश्छात्राः । ध्वनिरपि तस्य सुपरिचितः । तेन न ज्ञातं कदा तत्पार्श्वान्मुधा समुत्थाय, केन द्वारेण कन्याछात्रावासं प्रविष्टा भवेत् ? किं किञ्चिद् द्वारं तदाऽप्युद्घाटितं भवेत् ? मन्ये किञ्चित्-समयं पूर्वमेवाऽऽयाताभिश्छात्राभिर्द्वारमुद्घाटितं रक्षितं स्यात् ।

अट्टहासेभ्यस्तमसाद्गिरीशः कदा समुदतिष्ठत्, कदा कुत्र प्रचलितः कुत्र च प्राप्तः, इति नाऽयमजानात् । अपर इव कश्चनायं समाधिर्भवेत् ।

× × × × ×

(४)

छात्रावासीय-घटिकया यदैव नव वादितानि तदैव गिरीशः स्वपरिधान-पुटकमादाय निभृतं छात्रावासाद् बहिरसरत् । सोऽजानात् यत् छात्रावासीयानां कृते नैशभोजनस्यायं समयोऽभूत् । ततश्च सर्वेऽपि भोजनकक्षे पृष्ठतो भोजनव्यापृता भवेयुः । किन्तु किमिदम् ? रणवीरः कुतश्चन समागच्छन् छात्रावासस्य प्रमुख-प्रवेशद्वारि दृष्टस्तेन ।

'क्व गिरीश ? कुत्रचन गच्छसि किम् ? किमितीदं वस्त्रपेटकम् ?' तेन पृष्टम् ।

'आम भ्रात । कतिपयदिवसानां कृते गृहं गच्छामि । तूर्णमेव प्रत्यावर्तिष्ये ।" उत्तरितं गिरीशेन ।

'गृहम् ? एषु अवकाश दिवसेषु न गतः किं त्वं गृहम् ? अयं त्ववकाशोऽपि नास्ति । वार्षिकी परीक्षानन्तरं सम्प्रति पठनस्य क्रमस्तीव्रतरो भवेत् । त्वं कथमस्मिन् काले अध्ययनं त्यक्त्वा गच्छसि ? किं तत्र कश्चन विशिष्ट कार्यव्यासङ्ग ? कुशलं तु सर्वमस्ति ?'

"सर्वं कुशलम् किन्तु विशिष्टं कार्यमेकमागतम् । तदर्थं पित्रा सह कश्चन विमर्शो विधेयोऽस्ति । तं विधाय पुनः प्रत्यावर्तिष्ये । शृणु द्रव्यमिदं गृहाण । इदं छात्रावासे भोजनालये मासिकशुल्कं देयं स्यात् । मया पूर्वमस्य निधानं विस्मृतम् । त्वं मदर्थं तत्र तदिदं विलेखये । अहं सप्ताहादधिकं समयं न प्रतीक्षामि परावर्तने । तथापि यथासमयं द्रव्यप्रेषणं भवेदिति त्वां कथयामि ।' इति कथयता गिरीशेन रणवीरस्य हस्ते मुद्रा निहिता । 'इदं त्वपरं मदर्थं कुर्याश्चेत्साधु भवेत् । पुस्तकालयस्य पुस्तकद्वयं मया गृहीतमासीत् । तत्प्रत्यावर्तनस्यापि समयः श्व एव निर्गच्छेत् । वार्षिकोत्सवानन्तरं दिनत्रयस्य निरन्तरमवकाशोऽभूत् । एतस्मिन्नवकाशेऽध्ययनव्यापृतेन मया न बहिर्गन्तुमपि पारितम् । तत्र स्थितं पुस्तकद्वयमपि पुस्तकालये समयात् परावर्तये । पूर्वं स्वकं गृहे एव तदिदं नेतुमचिन्तयम् । किन्तु द्वारि त्वं मिलितः एव. अतः किमिति न तुभ्यमेव तदिदं प्रददे ? अतस्तदिदमपि त्वया कर्तव्यम्, कृपया,' इति प्रकाशेन गिरीशेन तत् पुस्तकद्वयं रणवीराय स्वस्वनपटकान्निष्कास्य प्रदत्तम् । रणवीरो न किञ्चिदवदत् स पुस्तकद्वयमिदं गृहाणेव नेतु निवेक्षोऽभविष्यत् ।

रणवीराय 'दिनत्रयावकाशे मया बहिर्गन्तुमपि न पारितम्' इति कथयन्नाय मनस्यजानादयत् स सत्यं न वक्ति । दिनत्रयमिदं न तेन छात्रावासस्थेन व्यतियापितम् अभूत् किन्तु स्वग्रामस्थैकस्य मित्रस्य नगरस्य गृहे यत्र निवसन् तस्य सुहृत् नगरस्य[1] निर्माण्यापेकम्यां कर्मकरोऽभूत्, निभृतं व्यतिवाहितम् । मित्राय पानेन कथितमभूत् यत् छात्रावासे भूरि व्यवधानमेषु दिवसेष्वध्ययनस्य स्यादिति नाहं तत्र स्थातु

१ फैक्टरी इत्याङ्गलभाषायाम् ।

वाञ्छामि । तत्र मदीया अन्ये सहपाठिनः समयं व्यतियापयेयुरित्येवैकान्ते किंचन पठिष्यामि ।' सत्यमेव च तेष्वेषु दिवसेषु नान्यत् कृतम् । अध्ययने, एकाकिचिन्तने, मनने, सिद्धान्तोक्ते, निदिध्यासने च दिनत्रयं, दिनचतुष्टयं वा कथं निरगादित्यनेन गणितमपि न । समाचारपत्रेषु कदा किं प्रकाशितमित्यपि द्रष्टुं नास्य वाञ्छा समुदिता । भोजनमप्ययं पार्श्वस्थे पान्थावासे[१] निभृततमभागावलोपु समयेषु गत्वाऽकरोत् । ग्रामसुहृत्सु एकं वसेवाऽश्नीत । स प्रायशः स्वनिर्माणी-भोजनालये एव भोजनं करोति स्म, स्वल्पीयसा एव च समयायाहोरात्रे सकृत्स्वपकोष्ठमायाति स्म । अतः प्रकोष्ठस्य तालिका गिरीशस्य सविधे एवातिष्ठत्तेषु दिवसेषु । अत्रैव स तां स्वसुहृदे परावर्त्य निभृत छात्रावासमगात्, स्ववस्तून्यादातुम् । नायं कञ्चनात्र द्रष्टुमवाञ्छत् । इदमपि साधेव जातं यद् द्वारि रणवीर एव मिलितः, न मित्रेषु तेषु कश्चन येषामट्टाहासैस्तस्य समाधिस्तस्मिन् निशीथे भग्नोऽभूत् ।

तदैव तेन त्रिचक्रा पण्यशकटिका[२] राजमार्गे यान्ती दृष्टा । न तस्यां कश्चन यात्री स्थितोऽभूत् । द्रुतमेनामाकारयदसौ । तस्यां स्थित्वा निरदिशत् सोऽयम् 'द्रुतं धूमशकटिस्थलं प्रति चल । मत्प्रयाणस्य समयो निकटायात एव ।'' सत्वरमसौ यानमिदं राजमार्गे धावितुं प्रारभत ।

---

१ होटल इत्याङ्ग्लभाषायाम् ।

२ साइकिलरिक्शा इत्याङ्ग्लभाषायाम् ।



# मूल्यान्यमूल्यानि

शशि गुप्ता

"मातः ! अद्य मम कतिपयानि मित्राण्यागमिष्यन्ति । तेषां कृते किञ्चि-दुष्णपेयं मिष्टान्नं चेष्यते ।" विजयेनोद्घोषणेव कृता । "कथं अद्यापि मित्राणि ?" ह्य एव समागच्छन् ते । किमिदम् ? अधुना त्वमर्जनमपि न करोषि । अध्ययनं चाऽस-माप्तमेव । ततः किमर्थमेतदामन्त्रणादिकमायोज्यते त्वया" मात्रा स निर्भर्त्सितः ।

'अम्ब ! त्वं न जानासि । एष खल्वाधुनिको व्यवहारः' । यदि नाम मित्राणि नाऽऽमन्त्र्यन्ते, तदा त्वस्माकं प्रतिष्ठैव नशिष्यति" विजयः स्वमातरं समाश्वा-सयितुं प्रायतत ।

"कथं तदोपाहारगृहं नैव नयसि सुहृदः ? एतदर्थं रूप्यकाणि तु प्रतिमासमादत्से त्वम् । आवश्यकतैव का विद्यते स्वगृहं जनसङ्कुलं विधातुम् ?" कुपिता प्रापृच्छत् सा ।

"बाढं बाढम् । अद्य तु समारम्भं विधेहि । न पुनरामन्त्रयिष्ये तानि मित्राणि ।" पराजित इवैनया युक्त्या न्यवेदयत् स ।

अम्बा तु प्रहृष्टा ममतामेतामालक्ष्य । जानाति सा पुत्रस्य मृषावचनानि । परं किं कुर्यात् सा ? एक एव तु पुत्रः । न काऽप्यन्या सन्ततिः । तेनैव भोग्यमेतत् स्वर्जितं धनम् । परं निरर्थको व्ययस्तु निवारणीयः । अन्यच्च सेविका न तिष्ठन्ति गृहे प्रतिमासम् । स्वकीयं च तस्याः स्वास्थ्यं न खलु बाधासहम् । अतएव सा पुनरप्ये-तादृशमुत्साहं शिथिलयति स्म ।

सन्ध्याकाले विजयस्य सुहृद आगन्तुमारेभे । तन्मध्ये तेष्वेका युवतिरप्य-विद्यत । हेमेत्यभिधानमासीत् तस्याः । नैसर्गिकं तदीयं सौन्दर्यम् । वेशभूषा चातीव रम्या । युगानुकूलं तस्या नैपथ्यं बलादाकर्षति स्म युवकान् । तैः परिवृता सा मुक्त-भावेन स्मितान्यकिरत् । यदि कोऽपि तस्या हस्तं धर्तुं प्रयतते, तदा सा नैव वारयते ।

परं केनाऽपि व्याजेन हेम्ना तु शीघ्रमेव प्रत्याजहार सा। स्पष्टतः तदीयोपस्थित्या स्मितैरेव सर्वे एव युवका हृष्यन्ति स्म।

यदा च भोज्यसामग्री तत्राऽऽनीता तदा ते हेमां प्रीणयितुं वस्तूनि प्रयच्छन् पौनःपुन्येन। सत्यं स्पर्धेव समारब्धा तत्र। हेमाऽपि तादृशमनुनयं दृष्ट्वा कथं न मोदेत। परं भक्षणस्य तु सीमा भवति। सर्वां भोज्यसामग्रीं कथं सा निःशेषीकर्तुं शक्नुयात्? एतत्कृतत्या धन्यवादा एव प्रदत्तास्तदनन्तरम्। न किमपि स्वीकर्तुमशक्नोत् सा। तस्या निषेधमाग्रहमालक्ष्य ते स्वयमपि यत्किञ्चित्प्रत्तमाघ्रातुं वा प्रायतन्त। अन्तराले च महाविद्यालयमधिकृत्य वार्ता अपि चालिताः स्म।

"अद्य तु गुप्तमहाशयैः स्वभाषणे न किमप्यभिनवं प्रतिपादनं कृतम्। ते स्वयं भाषणाय प्रस्तुता एव न प्रतीयन्ते स्म।" एकेन समुच्चारितम्।

"अहं तु भाषणस्य समाप्तिं यावद् जृम्भणमेव चकार।" द्वितीयेनोदीरितम्।

"अरे! तदीया दृष्टिस्तु हेमामेव निभालयति स्म। वराकः स कथं ध्यायेत भाषणाय?" कथनेनानेन सह हेमाया दिशि नयनं सङ्केतमिव कृतवान् तृतीयो युवकः।

"नहि, नहि!" विरोधमिव प्रदर्शितवती हेमा। "प्राध्यापकास्तु वीणामेवावलोकयन्ति। मद्दिशि तु एकवारमपि न दृष्टं तैः।" प्रहृष्टेव प्रतीयते स्म सा कथयन्त्येतत्। परं सत्यस्य लेशोऽपि नाऽविद्यत तत्कथने, इति तु सर्वे युवानोऽजानन्। ततश्च तदीयां कथनभङ्गिमामालक्ष्य समग्र एव युवकवर्गोऽट्टहासं कर्तुमारेभे। नैव प्रवञ्चनायास्ते खल्वेवमिति। प्रकटीकृतं तैः सर्वैः। आत्मानं प्रति तेषां निष्ठां हेमाऽपि बहुशोऽजानात्। तदनु सा स्वयमपि मुक्तभावेन जहास।

"आः! गृहीताऽस्मि।" कथनेनानेन सार्धं सर्वे खलु पुनरट्टहासं चक्रुः।

एवमेव मोदमानास्ते होराद्वयं यावत्तत्रैवाऽतिष्ठन्। ततश्चागामिन्यवकाशदिवसे चित्रपटदर्शनाय निर्णीय नगरं प्रस्थितास्ते। तेषां निर्गमनमालक्ष्य विजयस्य मात्रा दीर्घमुच्छ्वसितम्। साम्प्रतमखिलमेव तदीयं गात्रं पीडया समाक्रान्तमासीत्। परं तरुण्या तया चषकपात्रादीनि प्रक्षालितानि। ततश्च परिश्रान्ता सा क्षणमात्रं शय्यामाश्रयत्। परं तस्या भाग्ये विश्रान्तिर्न लिखिता आसीत्। अत

परं तत्र आचार्योऽपि निर्मूल इव सञ्जातः । 'धिगेतादृशं पुत्रम् । न खलु विचारयति स पितृकुलस्य मातृकुलस्य वा प्रतिष्ठाम् ।' तया निगदितं मनस्येव ।

तदनु कदा खलु निद्रावशं समुपगता सेति तु तया नैव ज्ञातम् । परं कपाटोद्घाटनमुद्रणाभ्यां पुनर्नव जागृतिमायाता सा । झटित्युत्थाय सा मुख्यद्वारमुद्घाटयामास ददर्श च मन्दमन्दं गच्छन्तीं कामपि युवतिं किञ्चिद्दूरे । पृष्ठाकृत्या परिधानेन च हेमाया आकृतिः सत्यमेव प्रत्यभिज्ञाता तया । एतद्दृष्ट्वा बहुकालं यावत्तत्रैव तस्थौ सा । परं रुक्मिणी तु सम्प्रति न किमपि द्रष्टुं पारयामासतु ।

अद्य 'किं पश्यसि ?' विजयः पृच्छति स्म । किं स पृष्टवान् इत्यस्या मामस्तकमवगमयति स्म । सततं शङ्कितया गृहस्थमनावृत्तमपि तु नैवज्ञातं तेन ।

'पश्यामि स्वकीयं दौर्भाग्यम् ।' समुद्विग्नेन वचसा प्रत्युत्तरं दत्तं प्रयत्नेन तया ।

'परं न कोऽपि स्वप्ने निवारयति दौर्भाग्यं दुष्टया ।'' सुतेन वाक्चातुर्यमिव प्रदर्शितम् ।

'गृहागतं प्रविष्टमात्रं निवर्तते सत्वरम् । विजय आदिशति स्वजनं । न शोचनीयं त्वया किमप्यन्यथा गृहे । सर्वथैवाऽशुभावहा भवन्ति स्वपत्नीष्वप्येतादृश्या पुत्राय । अस्मत्कुलं मा खलु पितृकुलं भर्तृकुलं चाऽऽविलयितुं क्षमते । अतोऽस्या गाढार्थं सा एव परित्याज्यम् ।' उपदिदेश मां पुत्रमेदम् ।

"अलं भाषणेन मातः । तामहं परिशोधयितुमिच्छामि । तथाऽपि स्वीकृतो मयैव सम्बन्धः । अत्रैव सन्निधौ तरुणीमभि सम्प्राप्य वाग्दानस्य घोषणा करिष्यते पक्षद्वयेन । अतस्त्वया न किमप्यन्यथा चिन्तनीयं कथनीयं च ।" विजयस्य कथनं बुद्धिसम्मितमिव समाश्वासनमिवाऽभाति स्म ।

वार्धक्येन प्रपीडिता सा तादृशेन पुत्रवचसा किमपि विकल्पं सम्प्राप्ता । क्षणार्धं यावत् सा तनुजस्याऽऽननमेव निभालयामास । न विश्वसिति तया यदेतद्वचनस्य मस्तकं मृणालतुल्यमेव परिपूर्णम् । न कदापि चिन्तितं तया यत् तस्याः स्वकीयस्तनयः स्वविवाहार्थं मातुरनुज्ञामप्युपेक्षिष्यते । तदीया वार्धक्य-तरणी तु साम्प्रतं मध्ये समुद्रं निमज्जति सर्वथाऽपि दृढया । न किमप्यवशिष्टं तज्जीवनार्थमिति निश्चित्य सा प्रोवाच-

हेमाया वचोभिस्तु विजयस्य हृदयं विदीर्णमिव सञ्जातम् । यस्या कृते स स्वजननीमपि तिरश्चकार, सा तु प्रस्तर प्रतिमेव बाह्यं सौन्दर्यमेव धत्ते । तदन्तस्तु हृन्नाम्ना हृदीकेन स्फुरणमपि न विधीयते इत्येव समवधारितं भग्नमानसेन विजयेन । किन्तु अद्यैव निर्णयो जात इति कृत्वा स कथमपि किमपि धैर्यमङ्गीचकार । न कोऽपि लाभस्तत्र स्थितेनेति सञ्चिन्त्य स स्वगृहाभिमुखं प्रतस्थे ।

×　　　×　　　×　　　×　　　×

गृहद्वारं तु तथैवाऽनावृतमासीद् यथा तेन त्यक्तम् । एतद् दृष्ट्वा स कयाऽप्यनिष्टाऽऽशङ्कया विचलित इव समजायत । ततश्च स त्वरितगत्या गृहान्तः प्राविशत् । स्वकक्षमधिशयाना जनयित्री सदृश्य तदीयाः प्राणास्तु प्रतिनिवर्तिता इव सञ्जाता ।

परं तज्जननी तु निश्चलतनयाऽऽसीत् । पुत्रेणाऽऽकारितापि सा प्रत्युत्तरं नाऽददात् । ततस्तु त्वरमाणेन तेन मातुर्हस्तं नाडिका संस्पृष्टा । किञ्चित्कालं तु स किमपि स्पन्दनं नाऽनुबभूव, परं शनैः शनैः नाडिकायाः स्पन्दनाऽऽभासं मुहुरत्तामापेदे । एतेन खलु समाश्वस्तोऽपि स दूरभाषेण पारिवारिकं चिकित्सकमुदाजहार सद्य एव समागन्तुम् ।

चिकित्सकेन नाऽधिको विलम्बः कृतः परं तदन्तरे विजयस्तु मातृचिन्तया भृशमव्ययत । तदङ्गानि च यदा कदा प्रकम्पनमिवादधुः । निश्चितरूपेण न जीविष्यति सा मातरि दिवङ्गतायां मरिष्यामि । तु स्पष्टमेव प्रतीयते स्म ।

एतदन्तरे चिकित्सकः समागमत् तत्र । तेन तु हृदयपरीक्षणं यन्त्रेण रुग्णहृदयमचिरादेव परीक्षितम् । ततस्तु कोऽप्योषधोपचारस्तेन प्रारब्धः । प्रथमं तु स किमपि औषधं हस्तनाडिकायां निचिक्षेप । तदनन्तरं च तेन किमपि हृदयसंवाहनं विहितं । रुग्णायाः प्रतिक्रियां च दृष्ट्वा स निजवामनुष्यत् । ततस्तु विजयं यथोचितं निर्दिश्य निर्गतः सः ।

किञ्चित्कालानन्तरं जननी पार्श्वपरिवर्तनं विधाय स्वनयने समुन्मीलिते । स्वपुत्रं च पार्श्वे स्थितं समालोक्य सा प्रमुदितेव सञ्जाता । विजयस्तु मातुश्चरणयोऽवनतः क्षमामेव याचते स्म ।

# स्वीकृता

डॉ० नन्दकिशोर गौतम् 'निर्मल'

व्यतीतोऽर्ध निशीथकाल । विभावरी चन्द्र द्रष्टुं समुत्सुका । निशाकरेण निजकरैः रजनीनायिकायास्तमोवगुण्ठनमपाकृतम् । स्वप्नभावनाभिश्चिन्तितो दामोदर सहसैव जागृत । चन्द्रेण मिलिता रजनी विलोक्य तस्य हृदये स्वप्न साकारं कर्तुं मानसा जाता । "हे निशानाथ ! कदा तद्दिनमागमिष्यति यदा मम निर्धनस्य कन्यापि निजवरेण स्वीकृता भविता ।" उक्त मनसि तेन । स शय्यामुपतिष्ठत । मनसि महद्दुःख भारमनुभवन् चिन्ताजालमापतितोऽयं पर्याकुलोऽभूत् । निशा धूसरा जाता । उषानागरी समायाता । स्नानादिकं कृत्वा, पाथेयं नीत्वा आत्मजायै वरमन्वेष्टुं नगरान्तरं प्राचलत् स ।

देवदासेन पूर्वमेव प्रबोधित स इन्द्रपुरीमवाप्य धनाढ्य सुरेन्द्रमुपागमत् । भव्य प्रासाद विलोक्य तेन कल्पना कृता "कियत् सौभाग्य मे बालाया राधायाश्चेत् गृहस्यास्य गृहिणी सा स्यात्" किन्तु निर्धनतया तेन चिन्तितं यत् इयं सुकल्पना, न कदापि सत्यं भवितुमर्हति । पुनरप्यन्तर्मनसा स साहसं कृत्वा अजिरे स्थित्वा सुरेन्द्रमहाभागा ! सुरेन्द्रमहाभागा ! इति वारद्वयमाकारयत् । सुरेन्द्रोऽपि अजिरे वृद्धपुरुषं विलोक्य नमस्कृत्य पृष्टवान् "कुतः समागमिताः श्रीमन्तः ?

दामोदर — उज्जयिनीत ।

सुरेन्द्र — कथ्यतां कथं समागमनं भवताम् ?

दामोदर — श्रेष्ठिवरदेवदासेन प्रेषितोऽयं नन्दनात्मजो दामोदर । श्रीमतां दर्शनार्थं सम्प्राप्त ।

"अहा ! हा ! हा ! देवदासस्तु अस्माकं परममित्रमस्ति । इति उक्त्वा सोऽजिरमुपगम्य दामोदरस्य करं करेण गृहीत्वा निजातिथिकक्ष नयति । किञ्चित्-काल वार्तालापानन्तरं दामोदर पृच्छति "श्रीमतां सुपुत्रस्तु अत्रैव स्यात् ?" "नहि नहि आयुर्विज्ञानशिक्षाप्राप्तुं स तु भूपालनगरे वर्तते, चित्रं द्रष्टुमर्हन्ति भवन्तः ।"

महद्दुःखेन पतिमार्गम् अगमत् ।

इदानीं जगदिदं भीषणतरम् आसीत् राधायै । तया जीवनयापनाय सूचिकार्यं प्रारब्धम् परन्तु दुष्टयुवकानां दुराचरणात् तस्यास्तत्र निवसनमसम्भवं जातम् । राधा तत् स्थानं विवशतया त्यक्त्वा निराश्रिता च भूत्वा लक्ष्यहीनेव अचलत् । सम्मुखमेव रेलयानं प्राप्य विना विचारेणैव सा प्रथमश्रेणिकक्षमुपातिष्ठत् । किञ्चित्‌-कालानन्तरमेव यात्राप्रमाणपत्रनिरीक्षकः समागतः । सः राधां यात्राप्रमाणपत्रं दर्शयितुं पृष्टवान् ।

मृगीव भयभीता राधा अवरुद्धकण्ठेन रुरोद । राधायाः करुणावस्थां दृष्ट्वा सम्मुखासीनस्य युवकस्य हृदयं करुणयाप्लावितम् । दयार्द्रेण तेन तस्यै बालायै शीघ्रमेव यात्राप्रमाणपत्रं निरीक्षकात् । ततः परं स तां पृष्टवान् कुतः आगच्छति भवती ? कुत्र च गमिष्यति ? कथं च यात्राप्रमाणपत्रं न नीतं भवत्या ? परन्तु अबलया तया न किमपि प्रत्युत्तरं दत्तम् अपितु अपराधानन्तरमपि तस्याः नेत्रयोर्बाष्पधारा प्रावहन् ।

सहसैव युवकस्य दृष्टिः राधायाः मुद्रिकायामतिष्ठत् । मुद्रिका सा अभिज्ञाता । चिन्तितं तेन सहसा यत् इयं मुद्रिका तु मया भार्यायै समर्पितासीत् । साहसं कृत्वा स पृष्टवान् 'अपि भवती राधा ?' श्रुत्वेदं सा चकितवती उवाच' कथं भवद्भिर्ज्ञातं यदहं राधास्मीति ?' युवकोऽयं जगाद 'अङ्गुलीयकमिदं कथयति । कुत्र तव पितरौ ?'

राधा — द्वौ स्वर्गं गतौ । अनाथाहमेव दारुणेऽस्मिन् संसारे जीविता ।

शनैः शनैः सा सर्वां कथां तस्मै श्रावयामास ।

युवकः — वैक्लव्यं मा स्म गमः इन्द्रपुरीवास्तव्यः मुकुन्दनाम्नः सुतोऽहमेव अमरनाथोऽस्मि ।

राधा चकितत्रसिता भूत्वा लज्जया अवनमिता । सजलनेत्राभ्यां तया पृष्टम्" कस्मात् कारणात् गृहं गच्छति भवान् ?

अमरनाथ — जनकात् पत्रं प्राप्तम् । तेषां स्वास्थ्यं नास्ति समीचीनम् । चल त्वमपि मया सह पितृपादसकाशम् ।

राधया मन्ये पुनर्जीवनं प्राप्तम् । स्वामिनः औदार्यं प्राप्य सा सनाथवती । गृहं गत्वा तया हृदयेन एतादृशी श्वशुरसेवा कृता यथा तस्य हृदयमपि परिवर्तितम् । वृद्धावस्थायाः कारणात् मुकुन्दः दिवं गतः परम् अमरनाथेन सार्धं राधा तु जगत्यस्मिन् सुखमनुभवति ।



भित्तिग्राहमागता । "किमद्यापि चित्रवाहकः नागतः" द्वाराभिमुखं पृष्ठं विधाय स्थितं स्वपतिमवलोक्य साबोचत्

जनार्दनस्तिमिरे नेत्रे पक्ष्म न ज्ञानं किमन्वेषयन् आसीत् । तेन यामिनी वार्ता न श्रुता भवेत्, यदि श्रुतापि तदा तदुत्तरितुमुचितं नामन्यत । तन्मुखं पुरतो विभृत्य श्यामायमानं जातमासीत् । यामिनी तस्मादपि शङ्का सती कण्टकमिव जनि । सा सन्ध्यायां धूमिलान्धकारे स्वपतिं दिशि करुणापूर्णानिनिमेषं ध्यानपरायणा सती निरीक्षमाणाऽभवत् । यौवनेमुखमिदं कीदृशं प्रभासमानमासीत् । यदाहं परिणीय पत्युः सदनमागताऽभवम् ।' अद्य सर्वं काये कंकालास्थि पञ्जरात्मकं एवावलोक्यते । तस्य ध्यानं कस्मात् बहिर्निर्गतहस्तयोरप्यग्रिमम् । पादौ जानुनी, कपोलौ पूर्वमनौपमयविलग्नौ मांसस्थानं गलितं चर्मैव प्रतिभाति । दृश्यमानानि सर्वाणि केवलानस्थीनि गोचरीभवन्ति । स्वपतिं दृष्टवत्यामिनीलोचनाभ्यामश्रूणि प्रावहन्त यैर्मैदिनीपदान्चलं सिक्तम् । सा मौनमवलम्ब्यैव प्रतिनिवृत्ता । यष्टिध्वनिना जनार्दनस्य ध्यानं भग्नम् । धर्मपत्नी दृष्ट्वा नेत्रयोस्तेन गहनं प्रयुतम् । स तां निरीक्ष्य मुद्रितनेत्र एवोचे । त्वया किमपि भणितमासीत् ?

साचर्द्धा मनो परावृत्य चक्षुर्भ्यां निपेधं विधाय चिन्तितोदासीनमुद्रायामेव शिरोऽकम्पयत ।

जया नागताकिम् ? सो वोचत् भवान् द्वारि तिष्ठति । सा इतएवागमिष्यति । धर्मपत्नी शनैरवदत् ।

ग्राम विस्मृतम् ? सा कथं नागता ? घनान्धकारे तस्याः अनागति चिन्तायाः विषय इति पिता जगाद ।

चिन्तामापन्नः स सरोऽजयोः अधमानान्धकारे पश्चिमायां दिशिदत्तदृष्टिरतिष्ठत् । सान्द्रतमसि द्विहस्तदूरस्थमपि वस्तु द्रष्टुं न शक्यते । यामिनी यथागता तथैव निजगाम ।

नागता जयाऽपि विचारयन् जनार्दनो दीर्घं निश्वासं तत्याज । स्वकीयाऽऽर्थिकदशया स भृशं खिन्नश्च । सोऽचिन्तयत—

समाजं जीवनपर्यन्तं सेवमानस्य मम कृतं स किमकरोत् ? मह्यं राष्ट्रनिर्मातुं दीयमानं पदमुपहास्यास्पदमिवप्रतिभाति । मम शिष्याः सर्वक्षेत्रेषु कर्मे सम्पृक्ताः सन्ति । परन्तैरपिकिमहं कदापि सस्मृतः ? पुरस्काररूपे अवकाशप्राप्तं वेतनं शतमात्रमुपकल्पितमेवाहम् ? समाजस्यदृष्टौ मदीयमूल्यमेतावदेव ।

अतीताध्यापकजीवनस्य स्मृत्या तस्य समग्रं शरीरं रोमाञ्चितं जातम् ।

जीवनसङ्कटं वर्धमानमपश्यम्। सर्वदैवाधिकं बुभुक्षैवानुभूता। पैतृजीवन मार्गमपि तत्त्वतोऽपि न ज्ञाता। यदहं पूर्वपुरुषोपार्जित दायभागे प्राप्त तस्य पुनरुद्धारायापि नैव समर्थम्? तथैव भग्नावशेष सम्प्रति अस्फोटनं कार्यं चिन्तन मयापरं? सममध्यापनव्यवसाय कारि सम्मानदृष्ट्या नैवाराध्यते। भूति प्रसङ्गेन राष्ट्रनिर्माण कर्मणि जनताया अहङ्कार एवागमम्। सम्प्रति स्वयमस्मिन् अपरिचित इव आवर्तितोऽस्मि। यतो मम कस्यापि सहानुभूतिं प्रेमचापि नोपरीवर्ति। विभुक्षा सह प्रसृता यामिनी जीवनस्य यात्राया विशेषेण आदितः कष्टमयान्वभवत्। कदापि सुरुचिरधारावाहिन्दर नो पूर्णम्। तस्या मध्येऽपि चित्तं मम विलोड्य मम धैर्यस्य सीमा न तिष्ठति। बाधकस्यैव नेय कथा दीर्घ कि दशमभवाभवत्। भोजनाच्छादनयोश्चिन्तायापि व्यवस्था नैवजाता। मन्दभागिनी भार्यापि सा मामा-भूषणवसनादिसज्जासामग्री कदापि नाऽयाचत। सा नोऽज्ञानात स्वादिष्ठं मधुरं भोजनं किम भवति। शोभनानि च परिधानानि कानि भवन्ति। मामापि वसनं त एव सान्त्वनं नेत्रवारि प्रमृज्य स्वगृहकार्ये सर्वदापराजिता। त्वयापि ततस्तेन किं फलं जातम्? इतिमयं सा पादत्रय स्थिता सती तथा राष्ट्रनिर्माता यास्येव निःश्वासप्रश्वासगतात पतिकायां जीर्णशीर्णास्तरणमासीत सहस्रविन्दुनहरितासत्या वनितानि धनानि निरीक्षमाण एवासमीत।

तस्याप्यावरणस्यान्ते वयस्या विविधव्यवसाय कुर्वाणा सहृदाऽपि स्थिता प्रमोदनाना अवलोकित। तेषाम् धनधान्य सुखसुविधाभि परिपूर्णगात्र-जीवि। तुच्छ शिरस्त्राणमनया चतुर्दिशनिरीक्षन किन्तु सर्वत्र भयङ्करतैववता-यतन। व्यवसायन्नास्य कारणात् सर्वत्र वास्तोस्तवावनिष्ट। जीवनस्य शस्यात्, निरिच्छयनया सह शरीरमपि साहाय्य ना विदधाति। जीवनस्याया निर्धनतया, पराधीनतया, व्याधिना च पूर्णत प्रतिबद्धोऽस्ति, सन विमृष्टे कोऽप्युपायोनो-द्भवत। मनावधिकृत राष्ट्रनिर्माणकाय फलाभाव विडम्बनैव प्रतीयत। अस्याम-वस्थायामपि तत्र स्वकरौर्व सुखास्वरूपं परित्यानितम्। देशनृभि समाचारपत्रं जनतायैव राष्ट्रनिर्माणार स्वसाक्ष्य सर्वोन्नत स्थानमहं कुतूहलमिव जातम्, किन्तु मम मना स्वकीय धिक्पतनस्थानमवापारतमासीत।

सहसा देहे कम्पानुभूतिरभवत्। जीर्णकम्बल शरीरादपतनम्। छिन्न भिन्नवसनमध्याच शीतलसमीर बाण इव कायान्त प्रविशन्ति। तदैवजयाऽस्याती-तृग। सैव जीवनस्य महती तस्याशा। वेदनाया आधार एकान्तेनोऽवशिष्टा। सा काष्ठभार शिरसि कृत्वा तस्मिन् त्वरयाऽवपाते विक्षिपन्ती समीपमागतातस्य। गगनस्य विधायापि तस्या मुखमवनोदितु नभेरे। संवेदमासगन्तानमवशिष्टा।

सन्तप्ता तस्य जीवनमेवाऽऽसीत्। तनूजाऽभावग्रस्ता सती यौवन एव वार्धकमनुभवन्ती प्रतिभाति। तस्याः पाणिग्रहणं कोऽपि युवावरो नो कामयते। कन्यामन्तरेणापरं नत्रकिमासादनीयं भवेत्? दायजे किमपि वस्तु दातुं जनार्दनस्यसामर्थ्यमेव नासीत्। निर्धनस्य कन्यां कः परिणयेत्? जया स्वपितुः दारिद्र्यं परिचिनोति। सा स्वयं वनगत्वा छित्वा च काष्ठानिगृह्य समानयत्।

काष्ठभारं प्राङ्गणे धृत्वा बहिः स्थितपितरं विलोक्य चिन्तामापेदे "यदस्य सेवां कथं कुर्याम्।" न कोऽपि मम पितरं परिचिनोति, किन्तु ममाराध्यदेवमेषएव। सा प्राङ्गणात् बहिर्वेदिकामायता, यत्र पिताऽर्धमूर्च्छितावस्थायामासीत्। त्वरया तं सा कम्बलेनाच्छादितवती। आञ्चलेनाश्रूणिप्रमृज्य साऽवदत्। 'शैत्यं तु नो बाधते पितरम्'? स तामश्रुमुखी चिरं स्नेहेन सकरुणमपश्यत्। पितुस्तां दशां द्रष्टुं सा नो शशाक। सा तत्कण्ठग्राहं तारस्वरेण रोदितुमारब्धवती।

आश्वासोघनीभूतोऽभवत्। निम्बतरोर्नीडेषु कोकरणापरायणाः समवताम्। मासान्तेविशेषतोदिनत्रयात् भोक्तुं किमपि न प्राप्तम्।

तस्य दृष्टिः क्षितिजपारात् परावृत्य पुनः पुनः मार्गमायाति। सन्ध्यायाः तिमिरच्छाया मधूकपादपस्य पार्श्वे घनीभूताऽभवत्। तस्याशा समजनि। कोऽपि पदक्षेपोऽश्रावि। क्रमशो मानवाकृतिः दृष्टा। निराशासागरनिमग्नस्य वदने आशाप्रचरोऽभूत्। 'तनूजे! पत्रवाहकः ग्रामसौ भवेदिति मन्दमवोचत्।"

अद्यायं भवनादेशमानेष्यति। धान्याभावेन पाकस्थानं शून्यं प्रतीक्षते। वणिगापणं गत्वा भोज्यसामग्रीमानेष्यामि। अन्यथा विपत्तिः पिधानं जनिष्यते। पितुः वचांसिश्रुत्वा सा पुनर्जीवितेवाभवत्।

द्विचक्रिकां समुत्तीर्य पत्रवाहकः सविनयमवोचत्। भवदर्थमेवाकाले तिमिरमये मयागतम्। एकदिवसस्यापिविलम्बेन गृहव्ययस्य कदाचिदभीविघ्नं जायेत।

"धन्योऽस्मि पुत्र! धन्योऽस्मि। मया त्वं स्नेहेनपाठितः। त्वया मम महती सेवा विधीयते। परेशस्तवमङ्गलं विदधातु" जनार्दनः आशीर्मुद्रयाऽवदत्।

अत्र हस्ताक्षराणि । "भगिनिजये! वेतनद्रव्यगमने त्वया साहाय्यं विधेयम्" इति पत्रवाहकोविनयेन शालीनतयाविनिवेद्य तिरोदधे। हन्त! कोदृशोऽस्य राष्ट्रनिर्मातुः पुरस्कारः? जनार्दनो व्यथया कम्पमानः पत्रमद्राक्षीत्। जया कस्मिंश्चिद्भावनालोके निमग्ना निम्बमहीरुहस्याश्रये स्थिताऽश्रुप्रवाहमुञ्चन्तीप्रस्तरायितासीत्।

# द्वौ शास्त्रिणौ

मनोहर शर्मा

पण्डितज्ञानचन्द्रशास्त्री कलकत्ता नगरस्य ब्राह्मणभवनात् निर्गत्य शीघ्रं गच्छन्नासीत् । अद्य भोजन-निर्माणे तस्य कश्चन विलम्बो जातः । श्रेष्ठिन आपणे दैनिकं जपं कर्तुं तेन दूरं गन्तव्यमासीत् । कलकत्तानगरे समागतस्य तस्य अधिकानि दिनानि न व्यतीतानि । तन्नगरस्य विभिन्नमार्गाणां तस्य सम्यक्तया परिज्ञानमपि नासीत् । गन्तृभिः सह सङ्घट्टनस्यापि भयं तस्यासीत् । मार्गेच पर्याप्तो जनसम्मर्दः । स कदाचित् केनापि सह सङ्घट्टते चेत् परत्र कस्यापि प्रतिघातो न स्यादिति पर्यालोचयन् त्वरया गच्छन्नासीत् ।

ततः समागच्छन्नासीत् एको हृष्टः पुष्टः दीर्घश्मश्रुको विशालनेत्रः पुरुषः । स च मनसो मग्नतया मन्दमन्दमागच्छति स्म । जातस्तस्य घातः प्रतिघातश्च पण्डितज्ञानचन्द्रेण सह । पण्डितस्तेन पतन्निवासीत् । तमनवलोकयन्नेव पण्डितोऽवादीत् "जनाः साम्प्रतं सम्पन्ना अन्धाः । न च पश्यन्ति इमे मनुष्यमपि परापतन्तम् ।" श्रुत्वा चैतत् पुरुषोऽसौ समवाप्य उत्तेजनामब्रवीत् दृष्ट्वैवं वचनम् । इयं कलकत्तानगरी । नायं स्वकीयः प्रदेशः । कदाचित् देहपातेन सह प्राणपरित्यागोऽपि सम्भाव्यतेऽत्र ।"

ज्ञानचन्द्रेण न श्रुता कदाचिदेतादृशी कठोरवाणी परन्तु किं कुर्यादसौ । भूमिरियं परकीया । तेन दत्ता दृष्टिस्तदुपरि । असावपि विरराम । जाता काचित् विचित्रानुभूतिः । मनोयोगेनापश्यदसौ तं जनमवादीच्च "तव निवासस्थानं किम् ?"

अपि नामासि त्वं भानुः ? "इदानीं" तस्यापि जाता प्राचीना स्मृतिः । "ग्रामस्य नाम पश्चात् वक्ष्यामि । तावत् कथय त्वं कदाचित् ज्ञानः असि किम् ?" आनेदानीं ज्ञानचन्द्रस्यापि काचित् स्मृतिः । स हि अवोचत् 'अरे भानो ?"

पश्चादुभावालिङ्गितावेवातिष्ठताम् । मार्गे गच्छन्तो लोकाः महता कौतूहलेन दृष्टवन्तो दृश्यमिदम् ।

श्रेष्ठिन आपणगमनं विस्मृतं ज्ञानचन्द्रेण । स्वबालमित्राय प्रातो हस्तो धृतस्तेन । भानुनापि मित्रस्य स्कन्धे हस्तं धृत्वा ऊचे "कियान् कालो व्यतीतस्तदा-

आगमनम्य ? कुत्र च निहितो वासस्त्वया ?"

ज्ञानचन्द्रेणोक्तं "मासद्वयमतीतं मेऽत्रागतस्य । ब्राह्मणसदने मे वासः । श्रेष्ठिनः सर्वाईमल्लस्यापरो मंत्रजपार्थं गच्छन्नस्मि । एतदर्थं लभ्यन्ते त्रिंशत् रूप्यकाणि केवलं, यानि चात्र भोजनव्यये परिसमाप्तानि भवन्ति । नैतदतिरिक्तोऽपरोऽपि सम्पर्कः । न च केनापि परिचय एवास्ति । तव च कीदृशः समाचारः ?"

रामदुर्गपरित्यागादनन्तरमहमत्रैव निवसामि तथा श्रेष्ठिनः प्रतापमल्लस्य गृहे पाकक्रियां करोमीत्युक्तं भानुचन्द्रेण । प्रचलति सुचारुतया मे कार्यम् । सर्वप्रकारेण सानन्दोऽहम् । गुरुणा मह्यमियमेव विद्या दत्ता, यस्या लभ्यते फलमिदानीम् । एतावदुक्त्वा हसितं भानुचन्द्रेण । प्रत्युत्तरस्वरूपं ज्ञानचन्द्रेणापि हसित्वोत्तरितम् पाकशास्त्रीति ते नामापि सार्थकम् । ज्ञानशास्त्रीति मदीयं नामाधुना निरर्थकं सम्पन्नम् ।"

"भानुनोक्तं सर्वं साधु भविष्यति । भगवत्या कालिकाया क्षेत्रमिदम् । अत्रागतानां मरणं सममावेव करोति । धैर्यमवधारय । अवकाशं कल्पयित्वा मेलिष्ये त्वया सह । इदानीं नास्त्यवकाशो मम । तत्रापि च जायते विलम्बः । परश्व द्विवादन समये ब्राह्मण भवनं तवसकाशमागमिष्यामि, भविष्यति वार्तालापः सर्वस्मिन् विषये ।"

उभौ स्वमार्गमनुसृतवन्तौ ।

( २ )

रामदुर्गस्य संस्कृत-पाठशालायां सुदूरग्रामाणां विद्यार्थिनः प्रवेश्यन्ते । श्रेष्ठिनः सत्प्रयासात् निवासस्य, भोजनस्य, वस्त्रस्य तथा पुस्तकानां कृते समीचीनः प्रबन्धः । बालकास्तत्रैव वासं कुर्वन्ति पठन्ति च संस्कृतम् । ब्राह्मणश्चैकः पाचकस्तत्रासीत् । विद्यार्थिनां कीदृशोऽपि व्ययो न भवति । अध्ययनेन सह तेषां पालन पोषणञ्चापि भवन्त्यत्र ।

पाठशालायां विद्यार्थिषु एक आसीत् ज्ञानचन्द्रः अपरश्च भानुचन्द्रः । पृथग् ग्रामवासिनावपि छात्रावासे एकस्मिन्नेव कक्षे निवसन्तौ उभौ घनिष्ठमित्रे आस्ताम् । ज्ञानचन्द्रः पठने यावान् तीव्र आसीत् तदीयो मित्रं भानुस्तावानेव मन्दः । एको नक्तंदिवम् अध्ययने दत्तचित्तपरो भोजने शयने च प्रवीण आसीत् । ज्ञानचन्द्रेण भृशं प्रतिबोधितोऽपि तदीयः सुहृत् तथैवासीत् । केनापि यत् भानो भाग्यमेतादृशमेव । समयानुसारं ज्ञानचन्द्रेणोत्तीर्णा शास्त्रिपरीक्षा किन्तु भानुचन्द्रेण प्रथमाया पर्वतोल्लंघनं नैव कृतम् ।

पाठशालायां वासं कुर्वता भानुचन्द्रेण समवाप्तस्त्वेको गुणः । नैकवारं पाचकस्याभावे सर्वेषां छात्राणां कृते तेनैव निर्मितं भोजनम् । शनैः शनैरस्या विद्यायामसौ

प्रावीण्यमासादितवान् । अस्मिन् कर्मणि तदीय मनोऽतीव रमते स्म । अन्यापरमिद कारण यद् पाचकस्यानुपस्थितौ धृतस्य शर्करायाश्चोपरि भानोरेवैकमात्रमधिकार. । एकान्तेऽसौ अस्यावसरस्य पूर्ण लाभ विन्दति । पाठशालाया पाचकशास्त्रीति तदीय नवीन नामकरण विहितम् । श्रुत्वा चैतन्नाम भानुचन्द्रो नान्यथा मनुते ।

अध्ययन परिसमाप्य ज्ञानचन्द्रो रामदुर्गं एव वासमकल्पयत् । विवाहानन्तर पितरावपि अत्रैवानीतौ तेन । श्रेष्ठिना तस्य वासार्थं स्थान दत्तम् । अत्रैव निर्मित तदीय गृहम् । नगरे पूजाया पाठस्य च कार्यारम्भो विहितस्तेन ।

समयो व्यतीत । शास्त्रिण पत्नी क्रमश तिस्र कन्या सुषुवे । तस्य पितरौ पौत्रस्याननमनिरीक्ष्यैव स्वर्गतौ । शास्त्रिण प्रथमकन्या विवाहयोग्या सञ्जाता । तस्या विवाहे शास्त्रिण सम्पूर्णो धनराशिर्व्ययीभूत । यदा द्वितीया कन्या विवाहयोग्या जाता तदा शास्त्रिणावगत यद् अत्रनिवासेन कार्यं न चलिष्यति । अन्यत्रापि बहिर्गमनमेव वरम् । अन्ते शुभमुहूर्तं पर्यालोच्य कलकत्तानगरे ज्ञानचन्द्र कालिकाया शरणमवाप्य ब्राह्मण भवन वसतिमकल्पयत ।

( ३ )

ज्ञानचन्द्रस्य स्वकीय बालमित्रम् भानुचन्द्रो यदाकदा स्मृतिपथमायाति स्म परन्तु अद्य तु क्षणे क्षणे तस्यैव प्रतीक्षा आसीत् । द्विवादनसमय । परन्तु नायात भानुरिदानीमपि । ज्ञानचन्द्र कदाचित् मार्गं परिपश्यति चेत् कदाचित् गवाक्षं पश्चाद् पश्यति । ब्राह्मणभवने जना भोजनानन्तरम् विश्राम कुर्वाणा आसन् । कतिपयजना स्वग्रामचर्चाया लीना आसन् । तावदेव धमधम इति ध्वनिरश्रूयत । ज्ञानचन्द्र पश्चाद् दृष्टवा अग्रे आयात ।

समागतस्तस्य बालसखा भानुचन्द्र । दृष्ट्वा त ज्ञानचन्द्रस्य नये आनन्दाश्रूणि जाते । द्वे अपि मित्रे आसने अतिष्ठताम् । भानुना धूम्रवर्तिका प्रज्वाल्य एव वार अपीय मित्रस्य पुरस्तात् कृता । ज्ञानचन्द्रस्य नाभ्यासो धूम्रपानस्य तथापि यदाकदा ननापि धूम्रपान क्रियते एव । धूम्रवर्तिका नीत्वा तेनोक्त यत् अह बहुकालात् प्रतीक्षा कुर्वन्नासम् । मन्ये पाचनक्रियाया कार्याणि न पूरितानि स्यु ।

भानुनोक्तम् ' पाकक्रिया तु समय एव पूर्णता गता परन्तु अह श्रेष्ठिन आपण गतवानास्म् । तत्र त्वदीय कार्यमपि पूर्णं करणीयमासीत् । "श्रुत्वा चैतत् ज्ञानचन्द्र किञ्चिद् विहस्योक्तवान् "मामापर मदीयस्वद्यकते । कीदृशो भूत् वार्ता लाप श्रेष्ठिना सह ?"

धूम्रवर्तिका पिबन् भानुरुवाच 'कार्यसिद्धिरेवावगोचयते । श्रेष्ठिनो गृह-

मन्दिरस्य पूजकः शून्यां त्यक्त्वा स्वगृहं गतवान्। तस्य कश्चनापरोऽन्विष्यते तत्स्थाने। मया च तत्समक्षं भवदीयं नाम प्रस्तुतीकृतम्। 'पण्डितः साक्षात् कार्यः' इति तेनोक्तम्। कश्चन सज्जनः विद्वान् अपेक्ष्यते मया। केवलं विद्वत्तया नात्र प्रयोजनं किन्तु सज्जनताया अपि महती आवश्यकता। श्वः द्वादशवादने तस्यापणे चलिष्यावः। त्वया तत्र गन्तुं तत्परेण भाव्यम्।"

श्रुत्वा चैतत् ज्ञानचन्द्रः पुलकितो जातः किमपि समुचितं उत्तरं तस्य मनसि नायातम्। स्वमित्रस्य भानोः द्वारा स्वकीयभाग्य-भाण्डारं उद्घाटितं इव प्रतीतिपथमागतं। उत्साहप्रपूर्ण-शर्करापानमानीतं तेन एकवारमेव पीतं तन्मुहूर्ते।

"परस्परं मिलितयोरावयोः व्यतीतो युगः। कियन्तः सन्ति वार्ताः कथ्याश्च ते" इत्यपृच्छत् भानुः। तदा ज्ञानचन्द्रः स्वकीयां पूर्णां रामकथां मित्रपुरस्तात् कथितवान्। तेनापि मित्रस्य सम्मुखं स्वकीयं निखिलमितिवृत्तं प्रकाशितम्।

इदानीं सायंसमयः समापन्नः। अतः भानुः उत्थाय चलितः। तेन सह किञ्चित् दूरं गत्वा ज्ञानचन्द्रः परावृत्तः। अधुना पञ्चाङ्गस्याक्षराणि प्रकाशपूर्णानीव तस्य प्रतीयन्ते, स्वग्रहनक्षत्राणि उच्चस्थानेषु विराजमानानीव अदृश्यन्त। स मनसा कालिकां मातरं अस्मरत्, अवोचच्च– मातः! 'इदानीं मम लज्जा तव हस्ते निहिता।'

(४)

परेद्युः भानुचन्द्रः स्वमित्रं ज्ञानचन्द्रं सहृतं विद्वद्वेशं धारयित्वा श्रेष्ठिनः प्रतापमल्लस्यापणे प्रापितवान्। ज्ञानचन्द्रस्य स्कन्धे भगवद्वस्त्रमासीत् तदुपरि धृतानि दुग्ध-धवलानि वस्त्राणि। तस्य पादयोः काष्ठपादुके, ललाटे चन्दन-तिलकं, गले दुकूलम्, शिरसि च केशरवर्णस्य उष्णीषं सुशोभितमासीत्। श्रेष्ठी तु स्वयं अपठितोऽप्यासीत् महानुभवी। तेन पण्डितो ज्ञानचन्द्रः सादरं दृष्टः उच्चासने उपवेशितश्च। भानुनापि इदानीं धूर्तो विप्रवेशः न प्रतीयते अधुना याचकः।

सर्वप्रथमं श्रेष्ठिना ज्ञानचन्द्रस्य पुरस्तात् स्वीया जन्मपत्रिका प्रस्तुतीकृता। तस्य ग्रह-नक्षत्राणि स्वयमेव उच्चस्थानस्थितान्यासन् तथापि पण्डितेन ततोऽप्यधिकं तदीयं फलं प्रकाशितम्। ततः श्रेष्ठिनः प्रफुल्लता स्वाभाविकी तेन पण्डितज्ञानचन्द्रस्य ग्रामस्य गृहस्य च विषये पृष्टाः केचन प्रश्नाः। तदुत्तरं श्रुत्वा ततोऽप्यधिका प्रसन्नता सञ्जाता, यत् श्रेष्ठिनः जन्मस्थानात् नातिदूरमासीत् पण्डितस्य ग्रामः।

पण्डितवरेण श्राविताः केचन श्लोकाः मधुरस्वरेण, केचन कथा-प्रसङ्गा अपि व्याख्यासहिताः प्रस्तुतीकृताः। सहैवानेन स्वकीयं शास्त्रिपरीक्षाप्रमाणपत्रमपि तत्र प्रस्तुतीकृतम्। श्रेष्ठिनः गृहमन्दिरस्य पूर्व-पूजकः नासीत् परीक्षोत्तीर्णः। वर्तमानपण्डितस्य

तु द्वय विशयनासीन ।

इद आरम्भेव भवता पूजागृह निभालनीयमिति ज्ञानचन्द्र श्रेष्ठिना प्रोक्त । वेतनादि विषये तु भानुचन्द्रेण सर्वसूचना पूर्वमेव दत्ता । भानुनोक्तम्- "अन्यानि सर्वाणि कार्याणि पण्डितस्य रोचन्ते । इमे तु स्वकीया एव सन्ति ।" इमे भगवत सेवा कुर्युं , अस्मदस्मदाशीर्वादस्च दत्त् रिक्तवोचन श्रेष्ठी । इत्याकर्ण्य पण्डितज्ञानचन्द्रेण तत्क्षणमेव देववन्दनामाशीर्वचनानि मधुरस्वरेण प्रगीय दत्तानि । तेन आह्लादित श्रेष्ठिवर पण्डितप्रवराणा चरणस्पर्शं कृतवान् । तदनतर द्वावपि सुहृदौ प्रसन्नचित्तौ भूत्वा परावृत्तौ । मार्गे भानुना कथितम — ' इय भृत्या भन्दस्यस्यैव अस्ति तथा-प्यनेन सह निवास- भोजनादिकस्यापि शोभना व्यवस्था वर्तते । समये समये दान दक्षिणादिकमपि अन्तोपलभ्यते । स्वकन्याया विवाहावसरे इद सर्वं स्वयमेव प्रकाशित भविष्यति ।"

पण्डितज्ञानचन्द्रस्य मुखात् कीदृशोऽपि शब्दो न निसृत किन्तु असौ कृतज्ञता दृष्ट्या मित्रमुखमालोकितवान् ।

( ५ )

अपरेद्यु पण्डित ज्ञानचन्द्रेण श्रेष्ठिन पूजागृह विधिपूर्वकम व्यवस्था-पितम । सर्वं पूजाविधान यथाविधि सम्पन्नम् । पूजाकाले तेन मधुरकण्ठस्वरेण गीता श्लोका सम्पूर्णं श्रेष्ठिभवन गुञ्जायमानमकुर्वन । श्रेष्ठिन महिलावर्ग बाल- समुदायश्च प्रमुदितो जात । अस्मिन्नवसरे भानुमहाराजन समीचीन पूजक आनीत इति सर्वैर्व्याहृतम् श्रेष्ठि परिवारस्य सर्वे सदस्या पूजागृहमागत्य भगवत-श्चरणामृतञ्च पीत्वा परावृत्ता । तदनतर ज्ञानचन्द्र मौन धृत्वा जपकर्मणि निरत ।

दशवादन-समय भोजन सन्नद्धम् । भगवत भोगार्थं भोजन पात्रमादाय भानु पूजागृह प्रविष्ट । अद्यतनी भोजन सामग्री विशिष्टैवासीत् । पाकशालाया यत किमपि निर्मीयते तत्सर्वं भगवते समर्प्यते । भानुनोक्तम्— ' भो शास्त्रिन् ! भगवते समर्प्य पश्चात् भवता भोक्तव्यमिदम् । तदनन्तरमेव श्रेष्ठिवर प्रसादरूपेण भोजन करिष्यति । आपण गमनवेला निकटा वर्तते ।"

दृष्ट्वा भोजनपात्र पण्डितज्ञानचन्द्रेण- तण्डुलम द्विदलम, प्रचुरघृतस्निग्धा करपट्टिका नैकविधा शाका नपा सुरभिणा पूरकस्य मुख जलक्लिन्न जातम् । तत्रानुमान यत् भानो भीमकलेवरत्वस्य इदमेव कारणम् ।

भोजनपात्र समर्प्य भानुनोक्तम्— शास्त्रिन् ! नाह त्वादृश पठित ।

यदि अहमपि पठित्म् अभवम्, तदा त्वादृश एव पण्डितपदं प्राप्तुं शक्नुयाम् । इदानीं मया पाकशालैव सेव्यते ।" शास्त्रिणा तत्क्षणमेवोत्तरितम्— "भ्रातः ! तव पाकशालैव मां पण्डितमकरोत् अन्यथा मम विद्या व्यर्थैव स्यात् ।"

भानुः निवेदितवान्— "इदं कालिकाक्षेत्रम्, सैव सर्वान् पालयति । अहमपि तस्या एव शरणं प्रपन्नः ।"



भृत्य नियुक्तः । स तस्मिन् भृशं कृतज्ञः स्नेहं वात्सल्यं वा वितरति । येन दीपकस्य किञ्चिल्लघुक्लेशमपि विनश्यति चिन्ताश्रममपि तुदत्यल्पबाधापि बाधते । स तत्पालयति दीपकं पुत्रवत् । दीपकोऽपि यदा कदा तस्मै सर्वमेव गुह्यं निवेदयति, तस्माच्च यथोचितपरामर्शमप्यपेक्षते स्म । अद्य पुनरपि दीपकः खिन्नउद्विग्नस्तेन पृष्टः—'भाव अद्य नु ... ' इति प्रत्युत्तराय प्रतीक्षमाणे स्थिते तस्मिन् दीपकस्य मस्तिष्के एका विचाराशृङ्खला चलचित्रमिव क्रमशः पुरस्तान्निर्गता ।'

दीपकस्य जनको बाबू कृष्णकान्तोऽद्यतः दशाब्दपूर्वं स्वात्मजार्थंका सुमनोहरां सच्चरित्रामधीतशास्त्रां मृदुगामिनीं, मृदुभाषिणीं, काव्यकला संगीतप्रियां मुच्चकुलोत्पन्नां सुकन्यां चितवान् । 'न मानवीयं त्वप्सरैव स्वर्गस्ये' ति यदोक्तवन्तः जनास्तदा रमा दीपकस्य माता थूत्कारं करोतिस्म तादृशुभदर्शनमपसारयितुम् । न पतेत् कुदृष्टिः कस्यापि पतिनस्येति विचिन्त्य सदैव परेषां कुदृष्टिमवरोद्धुम् यततेस्म । दीपकस्य तु तस्याम् ज्योतिर्नलभयोरिव, चक्रवाकयोरिव, राधाकृष्णयोरिव सीतारामयो रिव शकुन्तलादुष्यन्तयोरिव च प्रीतिरासीत् । एम ए इत्युपाध्युपेता सा न केवलं संस्कृतसाहित्ये प्रवीणैवासीदपितु तस्या व्यवहारेऽपि संस्कृत-साहित्यं समाहितम् । भारतीय-संस्कृतेः साक्षान्मूर्तिरिवासीत्सा । स्वश्वश्रूं मातरमिव भगवन्तमिव भर्तारञ्चामन्यत ।

नूतनोपन्यासा तथैव तस्मै रोचन्ते यथा प्राचीनग्रन्थाः । भारतीया प्राचीन संस्कृतिः प्रत्यास्योपेनापि सा नासीदन्धश्रद्धिग्रस्ता । दीपकोऽपि गोष्ठ्य पर्यन्तं साहित्यसमागमे नासीदनुरक्तः स एवाधुना साहित्यिकी वार्तामारब्धुमैच्छत्शृणोच्च मनोयोगेन, यथा मधपोऽमृत बिन्दूनाहरति । ज्योतिर्न केवलं हिन्दी भाषाया मनेकान्नुपन्यासान् तस्य शिरः रम्भा स्तम्भनिभसुचिक्कणौ सुकोमले पृथुले सुमर्दनीये स्वकीये जघनयुगलेऽवधार्य वाचयित्वा तं श्रावयति स्म, प्रत्युत यदाकदा कुमार-सम्भव-मेघदूत सौन्दरनन्दादिमहाकाव्यानि शाकुन्तलादि नाटकानि कादम्बर्यादिगद्यकाव्यानिच वाचयित्वा हिन्दी-भाषायाऽनूदितवती । श्रीमदानन्दवर्धनस्योपन्यासं 'कुसुमलक्ष्मी' तु तस्याकृते प्रियतमा कृतिरासीत् । दीपकायाप्ययमुपन्यासो भृशं रोचते स्म । स तु दयितामपि कुसुमलक्ष्मीति नाम्नैव यदा कदा व्यवहरति स्म ।

ज्योतिस्तु वस्तुतः सा ज्योतिरेवासीद्दीपकस्य प्रभामयी रूपप्रभया, चञ्चला चलने, चपला वचने, प्रकाशितात्मज्ञानेन सरला स्वभावेन, संयुक्ता दीपकेन, सरसेन सरसहृदयस्य चरमपरिणतिः, उज्ज्वलनेनोज्ज्वलाचरणा, सभाक्त्रा पुण्यकर्मणा वचसा कायेन प्रेम्णा च ।

सन्ध्याकाले कार्यनिलयस्य कार्यकाले समापन्ने यदा दीपकः श्रमेण श्रान्तः दिवसकार्यं भारखेदेन खिन्नः स्वनीडे विहग इव गृहमाप्नोति, ज्योति तम् निर्वापयति शीतपानेन प्रीणयति तोयेन शीतलेन मृदु वचनेन च परिहरति श्रान्ति शीतव्यजनेन । तस्या मृदु हास चन्द्रिकेवासीत्स्वागते प्रेमप्रच्छद भ्रूभङ्गमेव तोरणद्वार, हृदयावासे प्रवेष्टुम् पक्ष्मणेवपादत्राणम्, नेत्रोत्पलश्रेणिरेव मार्गम्, बाहुपाशमेवासीदनङ्गधनुरिव । अधररागचारिणीव सा बिम्बाधरा प्रेम्णा स्फटिक-शिलापुत्तलिकेव नृत्यन्त्या-ह्लादेनाहृतवती ।

भवनोद्याने तयोरेकमेव निश्चितं स्थानमासीत् कोविदारस्य प्रच्छायायां, तत्रैकास्फटिकशिला मञ्जुलेवासीदेकोऽत्यामन्दो चन्द्रिकाप्रभमिव । मध्ये चैको जलप्रणालस्तेन सम्बद्धश्चैकश्शीकरनिर्झरः ऊर्ध्वं प्रवहमानस्तिष्ठति ।

हास-परिहास मध्य एव भृत्य आनयति सकामरूपिकाकषाय-पेयमल्पाहार सुभासमानेषु साधारिकाचषकेषु स्थालिकायामेवस्या सुसज्य । ज्योतिरवलोकते विविध वर्णानि पुष्पाण्यति मनोहरान् वृक्षान्, पुष्पितान् पादपान् सुभगान् विहगांश्च । कामरूपिका कषाय पीत्वा सा स्पृशति सुकोमलानि सकण्टकानि सुमनोहराणि सुमनस्तबकानि च । ध्याय ध्याय किमपि सामीप्यमोहिता चेतसि चिन्तिता विचारप्रवाहे प्रवहतिस्म । उपलपुत्तलिकामिवाचलका शिलामधितिष्ठन्तीं दूरगतमानसां चिन्तानिमग्नामवलोक्य तद्विचारतन्तु छेत्तुकाम प्रसन्नः निष्कामो दीपकः पुष्पमेकं शिरीषस्य सङ्गृह्य तस्या गौरवर्णं कपोलयोः कम्बुवद्ग्रीवायाञ्च परिवर्तते शनैः शनैः । तेन सा किञ्चिद्विहस्य दीपके दृष्टिपात करोति सस्मिता च सपुष्प पुष्प-सदृश तद्धस्त सगृह्णाति सुकोमले कमलनिभे स्वहस्ते ।

'कथमुद्विग्नासि ?' इति तेनैव प्रश्ने प्रक्षिप्ते 'अलं सन्दिग्धेन' इत्युक्त्वा सा पुनरप्युद्विग्नेव 'सुरभित पुष्पजालमिदं मह्यं न रोचते' इति प्रकल्प्य एवं तस्या आनने वनान् कापिश्चिन्ति प्रसृता । दशवर्षाण्यहोरात्राण्यनेनैव क्रमेण व्यतीतानि । दीर्घेन स्नेह सर्वत्र दर्शित । परञ्च रमाया दृष्टि परिवर्तितेवासीत् । सान्निध्यवर्तिनीभिः स्त्रीभिः सह यदा-कदा लपति तदा तदैव स्वन्नुशामात्रोशयति । विमनेनाति-मनोहरेण सौन्दर्येण । सा तु वन्ध्यास्मि । कः तारयिष्यति मे पुत्र पुन्नाम्न नरकात् । अपुत्रस्य गतिर्नास्ति, इह परत्र वा । परिणीतोऽप्यपरिणीतोऽभवत्मेमुनः । पुनर्परिणयार्थमयं स नैकवार 'परामृष्ट' । परञ्च स तु कर्णमपि न ददाति ।' दीपकेन तत्रमिदं निक्षिप्तं स्वचेतसि ।

'दीपक ! मे पुत्रक ! त्वया बलीवर्द एवाय पालित । किमनेन पालितेन।'

'अम्ब, मा मैवम् । तत्सर्वं जानाम्यहमि' त्युक्त्वावज्ञाभावेन सह स्वाध्याय कक्षे उद्याने वा विशतिस्म । दीपकोऽपि स्वकार्यं निलयात्पूर्ववदेव सध्याकाले समागाते ज्योत्स्ना तत्रैवाहूत । तावेव विलसन्ती रममाणौ वा दृष्ट्वा रमावा द्वेषभावेनाक्रान्तम् । एतत्सर्वं दीपकेन दृष्ट ज्ञातञ्च तत्कारणम् । सोऽपि खिन्न सन यावदध्ययन कक्ष प्रति याति तावज्ज्योतिरपिपश्चिमत्य पश्यति । जायते च अनयास्य कारणम् । भ्रान्तेव सा तत्रैव तस्मिन्नेव कोविदार-प्राच्छदे आत्मान शिलाफलके न्यपातयद्धन्येति शब्देन । जगन्जनकमीश्वर येनेद सर्वं विचित्रविश्व सृष्ट तमाक्षिपन्तीव सा पुष्पाण्यवलोक्य विस्तीर्णे नीलगगने किमपि पश्यति । दीपकोऽप्येकत विचार सागरे निमग्न । ज्योति साहसमाकलय्य त समाश्वासयितुमैच्छत् परन्त्वद्य स्वगाधार्णवे निमग्नेव सा यथा यथा साश्रुपात वलाद्विहसति तथा तथैव हसितदीप इव आभाति ।

'अयि, किमिदम् इति दीपक चिबुक स्वहस्तेनात्तोलयन्नाह ।

'न किञ्चिद्विशिष्टम्' अवदत्सा पूर्ववदेव । परञ्च स तु नाऽभवदनेन सन्तुष्ट । पुनरपि स पृष्टा कथमद्य नयनारविन्दयोर्हिमपात ?

'नान्यत्, मधुकरेण पातित खलु पुष्पपराग । तेनैवासचिन्ताकुलाऽहम् । तान्यपावलोक्यच ।

'तच्चिन्तनमेवाह ज्ञातुमिच्छामि ।' 'अस्मज्जीवनोद्यानेऽप्यमविप्य नुचेत सुमनासि 'एकैकमश्रु दूर्वाया पतति भासते च रत्नत्विषा । परञ्च ज्योतय कथ किमपि न रोचत इतितु न ज्ञायते । तथा स्वपावाद गुल्फेन विलीयते । 'कस्मान्नेदमुद्यान पुष्पितमितिमा व्यथयति ।'

'अलम् वाग्विलासेन ! नाहमवजानामिते प्रहेलिकाबन्द जालम् । नैवाह ते साहित्यालङ्काराम्नवगच्छामि, यतो हि वाणिज्यकोऽस्मि । मद्विधाना किमनेन व्यङ्ग्याभिव्यञ्जकेन सर्वेण ? सुसरला भाषैव मया ग्राह्या ।

दीपशिखायं दीपसामर्थ्येन वातावात सोढु भवय, न तु तस्य नीरसत्वं निस्नेहत्व वा । पूर्वमेवास्मात्सा स्वमस्तित्व समापयति शाम्यतिवा ।

'अपि श्रुत भवता यत्किञ्चिन्मयोक्तम् । मे सर्वमेव वृत निवेदित सान्निध्यवाम्नियाऽनामित्रया कन्यया । भवतोऽपि नास्ति किञ्चिदगुह्य प्रच्छन्नवा । किमिदानी मेवाभिनीत भवता दृष्ट भवेत । भवता स्वव्यथा मद्गोपिता । अन्तश्चिन्तित सन्मे स्मिति जीवयितुमिच्छति भवान् । परञ्च नेद मया द्रष्टु शक्यते । नाहमबोधा

'आर्ये !'

'कैषा ? ज्योति ? किमत्र ?'

'आर्ये किञ्चिद्वक्तुमिच्छामि । अपि श्रोतुं सक्षमा भवती ? लज्जावनतमुखी सा तत्रैव निश्चला निष्पन्दा च स्थिताऽसीत् ।'

'कथ्यताम्, कथ्यताम् भयं विमुच्य ।' 'अत्रान्तमिदं प्राङ्गणं शून्यमेव दृश्यते । कथं नु नाऽनीयते काऽप्यन्या पुत्रवधूः ? यथा सर्वमिदं ज्योतिर्मुखाच्छु वा वञ्चिताऽभवत् ।

'त्वया प्रस्तावितमिदमस्माभिः प्रस्तावनीयमासीत ।' 'आर्ये कुटुम्बस्यास्य सुखमेव मे सुखम् । तत्सत्यमप्यसह्यं, यथा खलु भवता मनोऽभ्यधात्तथाहं जानामि । परं विचारदीनाम् दोलनेन को लाभः ? अतोऽत्र सर्वोत्कृष्टा निर्णय इति मे मतिः । न जानामि कञ्चिदन्यमस्योपायम् ।

बाष्पायमानायाः तस्याः वृद्धायाः उद्भिन्नं मुखं प्रसन्नतायाः प्रभेनुकूलं, क्षणे एव प्रसारितम् । हिमखण्डानेक यथैव तस्याः मुखे स्मितिः स्पष्टा । विहसितेन नदीया चलयोऽपि विराष्टाः । तत्क्षणे एव सा ज्योतिं स्वस्नुषामालिङ्गितवती ।

ततस्तु दुष्टात्मा श्वशुरस्य वचनानि दीपकं विचालयितुं समर्थानि अजायन्त । स तदा व्यङ्ग्य-प्रहारं सोढुमक्षम विक्षिप्त इवाऽभवत् । व्यजनयन्त्रं वियोज्य लिखद्दीपशलाकाञ्च निर्वाप्याऽवाङ्मुखस्तत्रैव पर्यङ्के न्यपतत् । त्रिकोणाद्भुतं न किञ्चिदन्यदपश्यत् । स्वलघुपरिवारस्यैकस्त्रिकोणः । यस्य शीर्षे स्थितः स्वयमेव बिन्दुसदृशः । ज्योतिरसिता नाभेः भागे द्वे रेखे शीर्षेण सलग्ने । साभाधार-रेखामुपायोभौ बिन्दू मेलयितुमिच्छति परं दुष्करत्वमाप्नोति । भग्न एव त्रिकोणो लक्ष्यते । तृतीया रेखाऽस्पष्टैव । 'अपि त्रिकोणात्मकं जीवनयापनं सुखं सरलता वा विधास्यति, पूर्ववदेव स्नेहापेना प्रकाशमयानि ज्योतिर्नवा । नाहं करिष्याम्येवम् । द्वयोर्विभवने स्नेहे एकस्य भोजनं द्वाभ्यामपर्याप्तमेव भविष्यति । तेन त्वेकस्या अपि पूर्तिरसम्भावनीया ।' अथायं ज्ञानस्योपयोगितालाभ नियमस्तेन मुहुर्मुहुः स्मृतः । 'स्नेहेऽल्पे सति तन्वाहस्य वृद्धिर्नाशयति यस्य पूर्तिरशक्या । पर्याप्त स्नेहप्रदानेऽसमर्थो भविष्यसि । यथाकिम्, एकस्मिन्नेव दीपे द्वे वर्तिके ज्वलन्त्यौ सर्वाधिकं प्रकाशं किं न तनिष्यतः ? एकस्मिन्नेवोद्याने द्वे लते स्वस्वालवाल आश्रये वा पुष्पिते पल्लविते किं न भविष्यतः ? उद्यानपालोऽपि समानस्नेहप्रदाने समर्थो भवितुं शक्नोति । किमनेन ? भ्रान्तमिवाहमद्याऽसन् स्नेहं सौनिकपिण्डेभ्यः तोलयितु-मिच्छामि । किं वान सर्वोऽस्मदहमपि । नैनयोऽयम् विषयः चैतन्यैवानुभूयते तथापि शास्त-

हृदयो न तु बाह्यान्यथारूपेण । यथा विस्तीर्णो हृदयस्तथैव प्रगाढं विस्तीर्णञ्च साहचर्यञ्च । तत्रापि तव स ज्योत्स्ना हृदयगाम्भीर्यं स्मरति । तस्या त्यागं तव स्नेहानां विचित्राणि चित्राणि तस्य मनसि सन्धारितानि यत तस्य हृदयानवलानऽजायन्तैव भक्तो भव श्रद्धाप्रद स्निग्धा नारी हन्त्य कुटुम्बे प्रश्नोऽपि न जायते । मातृ वेन सा सदैव वत्सलयति ।'

खट् खट् खट् इति द्वारपक्षताडनम् ।

'स्वागत-स्वागतम्' इत्युक्त्वा यावत्कपाटाबुद्घाटयति तावदेव स्वभावतः प्रसन्नवदनामपश्यत् ।

पुत्रक ! ज्योतिस्त्वमनी यत् ... '

'आम, अम्ब ममापि निर्णीतं भवत्योरिच्छानुकूलमपि । श्रोतुमिच्छति भवती ?'

'नाहमिच्छामि श्रोतुं वत्स, यतो ह्यमवगच्छामि तेऽन्तःकरणस्थितम् ।' इति वात्सल्येन लालयति तस्य बहुकालम् । "स्वस्त्यस्तु ते वत्स । वर्धसे, अक्षया भवतु ते प्रजा ।'

'अपि कुशली भवान् ?'

ओम भवती ।'

'गाढमेव चिन्तितोऽस्मि उत वा " ' ज्योतेरपूर्णे मति प्रश्न दीपत ससोत्थामस्त । पलायन प्रादुरभूत्तस्य चेतसि । तस्य नयनयुगलमश्र्वार्द्रीभूतम् । तत्क्षणेऽस्मादेव स तत्र मृषा विवाद परिहर्तुं नाम स्वकार्यनिलय प्रत्यन्तरमेव खिन्न सन् पलायितवान् । एवमेव करोति स्म स प्रायश । तत्र कार्यनिलय पञ्जिकासु निमग्नन ज्योत्स्नामतयोर्विवाद-सन्दर्भाणि विस्मृतानि । पञ्जिकानां सन्दर्भाण्येव तत्र स्मृतानि । पत्राचयो विलुप्त स निर्निमेष पश्यति, गाम्भीर्येणावलोकयति सार्थं यत लिपिका कुर्वन्ति कार्याणि तुत्परत्वेन । पत्रोत्तराणि प्रेषणपञ्जिकायामुल्लिखितानि न च प्रेषितानि । पञ्जिका परिवृत्य यावत्पश्यति, तावदस्य पत्रोत्तरस्य मूर्ला परि सत्रनिलिपि सूचीकृता तस्य दृष्टा । पश्यन् तत्र मुद्रेणादिष्टम्- एतन्मनोरथमाहूयताम् इति । आगत स प्रभूतञ्च गर्हित 'अपि जानाति भवान् यत्पूर्वनिर्णय कृपयैव विधेया शीघ्रमवाप्ति स्थानं च प्रेषणीया । उभयोरेतस्मिन्नेव स्थानगत किञ्चिद् ' इत्यपूर्वमस्यवाक्यमूर्ध्वमेव दीपञ्च निबद्ध्य गृहामहोदय समादिशत्तत यामनाय 'भवता ननु शयने, प्रेषणीयञ्च मूलपत्रं

वाञ्छित स्थानम् ।" इत्यादिशन्नेव स निस्तानिमानाऽभवत् । स्वस्था महोदयोऽपि 'यथाज्ञापयन्ति श्रीमानिति निवेद्य स्व-सम्भाराममन्वच्छत् 'सुरम् ? प्रतिलिपि ? मुद्रण-मन्त्रमेव प्रेषणीयम् । प्रतिलिपिरेवास्माभि रक्षणीया ।' स स्वोक्तानि वचनानि मुहुर्मुहु प्रतिगृह्णाति ।

वर्षाकाल । मेघाच्छादितेऽथाकाशे वारिदा इतस्ततः भ्रमन्त्यनवरता' । ज्योति तेषामालोडन पश्यति । मालवगता दीपकस्यैव टृतेन । तस्य हृदयाकाशे एवमेव चिन्तावारिदा आयान्ति यान्ति च क्रमेण । परिणामतोऽङ्कुरणापि सजायते । उभयोरपि एकैव परिणति । कोविदार तत्रैव तिष्ठति प्रफुल्ल । परन्तु तस्य छायाया मुक्ता पालिता वर्धिता च माधवी लताद्वयस्तमपुष्पिता । द्वितीया च यूथिकापि सद्य आरोपितापि तथैव पुष्प-विहीना वितनोति कोविदार क्षेत्रस्य च पाकपूर्णमहाव सम्बधनाना । यूथिकायुक्त कोविदारो नतो माधवी प्रति । दीपको पि ध्यानस्थ-योगीव बलाबाहृत प्रस्थामृदु मनुष्या सा प्रतीक्षाकुला स्वागत-तत्परा सजीभूतामुद्घाटित हृत्कपाटाम युमुना नताक्षा मानिनामलसमपि सगर्वा सुभगां च परित्यज्य तत्रैवो पासन्नपत्र ध्यानावस्थिता ज्योति शिलाफलकमधिष्ठिता आसीत् । स पूर्वदृष्टां स्मृत्वा तदैक शिरीषपुष्प नीत्वा तस्या ग्रीवायां कपोलयोर्वा स्पर्शयति । पार्श्वस्थ ज्योतिरपि ध्यानेन युगनाम नोडितेव 'मीठा' इत्युक्त्वा सा विहस्यैकतोऽपासरत् ।

मध्याह्ने गगन-मण्डले सतर्कताऽपसमासि प्रसृतानि । शून्यमेव जगच्च दृश्यते सपर्यपर्यङ्कमपि विद्युल्लता सूचयतीव ।

'नहि प्रिये रत रत" इत्युभौ समालिङ्गितौ सोत्सवैव निर्गतो विहर्तुम् । यावद्द्रुपगच्छति तावद्दृष्टि प्रामारोपिते पाटलपादपे निपतति । तत्र रक्त-स्निग्ध किसलयान्च दृष्ट्वा सम्लग्न भूत्वा– पश्य, पश्य प्रिय !' इति मात् गुरि-मकरंदशितवान् । ज्योतिरपि तत्रयो तरुणामञ्जनमिव विक्षिप्य, स्मितावनतमुखी 'ननु ननु सन्तान् एवमेवास्ति किञ्चिदन्तर्गताजननम् । स तु अज्ञातार्थं जिज्ञासुरिव प्रिया प्रतिपश्यति । सोऽत्र सर्वमेव निवेदयितुमिच्छति तथैव स्मिता यतोऽत्र प्रथमारोपिता पाटलगनाव न केवल बाल-किसलयाविता अपितु पुष्पाच्छादितापि भवितुमर्हति । 'इत्युभौ स्वास्पद प्राविशताम् ।

दीपकेनोद्दीप्ता विद्युद्दीपशलाका किञ्चित्काल लुपलुपायत् प्रसारयति च श्वेत-चन्द्रिकामिव दुग्धसदृश प्रकाश चतुर्दिक्षु । तत्र दुग्धधवले श्वेतप्रकाशे पतितासीदेका पत्रिका दीपकस्य वामहस्तकञ्चुकस्य बाहौ द्वितीया च तस्य दक्षिणहस्ते

'आम, मया सर्वं सम्यगेव निरूपितम् ।'

'अमितायाः तु किं ?'

'तया निर्णीतं पूर्वमेव ।'

दीपकस्ततो न जाने कदा कथं वा मार्गं दृश्यान्यपश्यन्नेव स्वं गृहं प्राप्तः । स्वहृतं प्रियायै यथावर्ष्यितुमैच्छत्, परञ्च न तादृशं सत्वमाप्नोत । पत्रेण स स्फुटं सन्दर्शयितुकामः यदा पत्रं लिखति, तदैवापश्यदेकां कामपि पत्रिकां ज्योतिहस्तलिखितामुन्मुक्ताम—

प्राणेश,

यद्यप्यहं भवतः अगाधे स्नेहपारावारे निमज्य गच्छामि परं दुःखानुभूतिः स्वकथनेनैव अभिव्यक्तीयमनिश्चयम् । मुदासेन सम्पूर्णवृत्तं निवेदितं भवतः पूर्वमेवा-गम । सम्पूर्णं परिवारं मत्कारणेन दुःखमाप्नोतु इति मे हृदयं न स्वीकरोति । भवता सम्पदैव मे सम्पदा । अतोऽहमात्मनः प्रसन्नतामपि बलिकर्तुमिच्छामि । भवदारोपिते पाटल-पादपे प्रस्फुटितं पल्लवं मे समीपे सुरक्षितोऽस्ति । पुष्पे जाते सति शीघ्रमेव सुरभिना भविष्यन्ति भवन्तः । तमहं प्राणपणेनापि पालयिष्यामि । तदैव भविष्यति भवता प्रतिकृतिः । शाश्वतः सनातनोऽमरः वायं स्नेहः । आवयोः स्नेहवारिधारा सदैव प्रवहिष्यति ।

भवतामेव सदैव दीपस्येव

ज्योति

दीपकः सात्रोशः 'अम्ब, विनष्टं सर्वं, हा धिक् हा हतोऽस्मि । सर्वनाशं मञ्जातं, अम्ब !' क्रन्दनं निशम्य रमया रामचरितमानस-पठनं मध्य एव परित्यज्य तत्रागतम् तया नेदं ज्ञातं यत्किमपि एवं भविष्यति लक्ष्मा परस्य । दीपकः तत्र पर्यङ्के विगतसंज्ञः पतितः आसीत् पत्रं हस्ते धारयन् । सा त्वरितमेव दूरभाष-यन्त्रेण डाक्तरं सूचयामास । तनश्च सा पत्रं पठितवती । चीत्कारमेकं सहसैव तन्मुखान्निर्गतम् "मया न ज्ञातं यत्ममैव सुमनोहरोद्याने कण्टकाकीर्णो गुल्मः उप्तः ।

अश्रोपित्वा दीपकः स्ववृत्तिमस्यायमेणैवाप्नोति च स्वजीवितं निर्बाधं सम्यगेव । स्वमातरं प्रेषयति वृत्तिम् । परञ्च स गृहं नावस्थातुं शक्नोति । भवनं तु दूरादेव द्रष्टुमिच्छति । नार्या श्रोनोऽप्यप्रवृत्त्या स प्रव्रजकान् परिबोधकः कृत बालकान् पाठयति । एनेनधनमर्जयति कालं यापयति च मुहुर्मुहुः स्वप्रियतमां ज्योतिं तयोक्तान् साहित्यसन्दर्भांश्च स्मरति यदा-कदा-लिखति, काव्यं वा करोति ।

यन माहित्य-सन्दर्भ सम्भारस्त प्रेरयति किञ्चिल्लिखितुम । स्वानुभूति मत्रनेनैवाभि-व्यनक्ति । नारी चरितस्यारोहावरोहान् स्मरति यं सामान्या जना यथा कालिदास धनानन्दादय महाकवि-पदमारूढा कृता । पवनस्योत्पन्नका हरितै पर्ण्णवितैश्च वृक्षैर्विविधवर्णपुष्प पादपैश्चाच्छादिता । प्रशमाधिकृतमिवासीत सम्पूर्णं वनम । कस्यापि पुरातन महर्षेराश्रमादून नासीत् तत ।

दीपको विचार-मग्नो यावद् भ्रमति तावदेका कदली कण्टकाकीर्णे गुल्म समीपे आरोपिता विलपिताश्च पश्यति । कदली स्वमरात्प्रकृत्या दर्पिता नृत्यतीव दृश्यत । गुल्मकश्चाविच्छिन्नमिच्छति । परञ्च गुल्मकस्तु स्वकण्टकैर्विच्छिद्य द मालि ङ्गनमस्वीकरोति । तयो क्रीडा तस्य गृहस्थस्य सम्पूर्णां कथा पुनरावर्तयति । कापि युवति त सगाम्भीर्यमुद्विग्न विशङ्क्य सम्मुखेस्थित्वा वाष्पानाद्पकर्षति । सोऽविलम्ब मेवाभिजानाति ताम । परन्त सा दीपक कूर्चेणाच्छन्नमुख नाभिजानाति । अमिता एषा त्वमसि ? आश्चर्यचकिता तस्याकृत्यालङ्कृता सा.अन्य मेवापश्यत्त मुखम । स तु— अलमातङ्कितया । मा भैषी कस्मादनागतासि भवनीतिकथ्यनाम् ज्ञातुमिच्छामि' विहसन्नेवोक्तवान् ।

'को भवान् अपि मया ज्ञातु शक्यत ?

भवती मामभिजानात्येवे'त्यावश्यकता न वर्तते ।

कथमाशङ्किता भवतीति ज्ञातुमिच्छामि स्फुटम ।

कथमह ते माहात्म्य विदधामि ? भय परित्यज्य कथ्यता सम्पूर्ण वृत्तम । सत्य न दापयितुमर्हति कोऽपि । तस्य फलानि विषमभूमावपि सुमधुराण्येव भवन्ति । य सत्य गोपायति स प्रज्ज्वलितमनलमवाच्छादयति वस्त्रेण । सत्येनासत्य तु रामायनिकषस्तमिव दह्यते ।''

अमितया वाष्प पर्याकुलेक्षणया हृत्वालुप्य प्रमाजयितुमिव सम्पूर्णा कथा श्राविता । पूर्वोक्ता गर्वोक्तय यन्त्र स्मृतिपटलमभ्यायाति, तत्र कृष्णोरगइव दशति । उद्योगालये महान् विप्लव प्रस्फुटित । आक्रोशिता श्रमिका भवनाट्टालिकामाग्रे दृश्यन्त । जनतो पितदाव ग्निरागच्छति । तदैव भवन वहिवाभक्त्वापतत । तत्रैव सहापतदेक श्रमिक । राजपुरुषा अपि तत्क्षणमवापतिता । त पुरुषैरावा पलायितौ निरूपितौ ।

कि विलम्बेन शीघ्रमेवाधुना त्वया न्यायालया गन्तव्य, तत्र च आत्म समर्पण करणीयम । एवमेव प्राप्य यत्नु न्याय ।'

'पक्षाज्ञानर्या तु भवन्त । भवन्त एव मनाथीकृत्य मां तत्र समर्पयन्तु, येन रक्षणं न्याय च लभे।' स्वल्पतापेन तप्तं स्वर्णं यथा त्यजति कालुष्यं, तथैव साल्पसन्तापेनैव सन्तप्ता मनसः कालुष्यं परित्यज्य विशुद्धा सरल स्वभावा च भूत्वा भासते [illegible] । सा मानमेव धिक्करोति । त्याज्या खलु मे प्राणा इति सा मनस्यकरोत् । राकेशआरक्षाधीक्षकोऽपि मित्रस्य वचनेन विप्रवस्य शीघ्रमेवावधारयद्वस्तुस्थितिम् । सुहृदागमने स्वागताय चायमानेतुमाज्ञापयति । चाय-पेयमानयन्ती परिश्रामवदना कृशोदरी विशोषिताञ्जन नयनामुन्मुक्तदीर्घालका शुभ्र-वस्त्रावृता च दृष्ट्वामितादीपकौ चकितावभवताम् । तदुपरि दृष्टिं विनिवेश्य यावदपश्यदामुष्मी तौ तावत्साऽपि चकितापलक-निस्फारित-नयना तत्र तिष्ठति, स्वसन्तुलनमपि च त्यजति । स्खलन्ती निपतन्तीव सा पादयो पतति ।

'कस्मात्त्वमेवानीत चाय पयम, जायातो भृत्य किम् ?' राकेशेन पृष्टाऽपि तया न प्रयुक्त एकोऽपि शब्द । ताम् रक्तकामरूपिका कषाय पेयामवाङ्मुखी विह्वला वाष्पायमाणा चालिङ्ग्य स्वाधुमि तद्धस्ताणि मिञ्चति ।

राकेशस्तु किं-कर्तव्यविमूढ शिलाखण्डमिव निश्चल निस्पन्दश्च पश्यतीव सर्वं वृत्तम् । अमिता स्वपूर्वपुरुषं लज्जितावनता च विसर्पति । चाय-पात्रन्तु भवद्भगिनिवाष्पमुन्मृजति स्म ।

'ज्योते !' चकितेन राकेशेनोक्तम् ।

'आम् भ्रात !' इति लज्जायमाना पादाङ्गुष्ठेनधरातल भेत्तुमिवेच्छति ।

राकेश, नाहं राजेश, दीपकोऽहम् । एषाऽमिता ।' तेनैव सम्पूर्णं वृत्तं निगदितम् ।

अथ त्रिकोणस्य तिस्र रेखा पुनर्मिलनं भेजु । तेषां बिन्दव समाविष्टा परस्परम् । ततोऽवाप्त शिशुरेव ।

'बालोऽयं क ?'

'त्रिकोण-मग्ने प्रयागोऽयमिति परिहासेनामितोक्तवती ।

अथ कोविदारसमीपे कुसुमाकीर्णं शिला-पट्टमधितिष्ठन्ति सर्वे पाटल-पादपा पुष्पैराच्छादिता । माधवी-लतापि सुतरां पुष्पिता सदृश्यते ? ।



# सत्यस्यान्वेषणम्

कुमारी प्रभा

प्रकाशो विशालश्चाऽभिन्ने मित्रे आस्ताम्, परं ते विचारणाया स्तरे नितान्तमेव भिन्ने विद्येताम्। विज्ञानस्याध्येता विशालस्तर्कप्रवणो विचक्षण प्रज्ञया च संयुक्त आसीत्। स सदैव स्वकीयानां जिज्ञासानां तर्कसंगतं बुद्धिग्राह्यं च समाधानमन्वेष्टुं प्रायतत, परं दर्शन साहित्यादेश्चाऽध्ययनेन स नितान्तमेव सम्वेदनात्मको भावुकः परमश्च आस्तिकः समजायत। स स्वकीयानां समस्त- जिज्ञासानां निदानं सत्यस्याऽन्वेषणेनैव प्राप्तुमियेष। समय एव विगते सप्ताहे स नियमित रूपेण स्वामिनः सत्य व्रतस्य 'सत्यमेव ब्रह्म' इति विषयमाधृत्य प्रवचनं शुश्राव। रविवासरस्य प्रातः स्वमित्रं प्रकाशं मिलित्वैव तां समस्यामप्याहृत्य उपन्यवर्णिता। प्रकाशेन तद्वचनं श्रुत्वा विमनस्कतया प्रत्युत्तरितम् -

बन्धो! किमर्थं निरर्थके चिन्तने निमज्ज्य स्वचित्तमशान्तं विदधासि? सत्यस्यान्वेषणे न केवलं त्वमेव प्रयुताहं स्वामिनः सृष्टेश्च सर्वे प्राणिनोऽनन्तकालात् प्रयतन्ते। परं किं तेष्वेकेनाप्यस्यां दिशि साफल्यमवाप्तम्?

विशालेन प्रत्युत्तरितम्- सुहृत्! अहं तु सत्यमन्विष्यैव शान्तिं प्राप्स्यामि। स्यात्तदर्थं मम किमपि। कथं खलु सहमतो भवेयमहं त्वदीयाभिः धारणाभिर्यत ज्ञानविज्ञानदर्शनजीवनादीनां च सत्यमेकमेव विद्यते। वस्तुतस्तु सत्यान्वेषणेनैव सत्यमभिज्ञातुं शक्यते।'

अनुत्साहेनेव प्रकाशेन कथितम् त्यजैनम्। त्वया तु पुनरपि सदैव पारम्परिकं विवेचनं प्रारब्धम्। अनेन तु निस्सीमं विवादं कृत्वापि न कमपि निष्कर्षमवाप्तुं शक्नुवः। न स्वीकरोषि किं वैज्ञानिकं तथ्यं त्वम्? न किं विज्ञानस्य सर्वे एव प्रयोगाः तथ्याधारिता भवन्ति? अस्तु, अहमपि प्रयोगैरस्य सिद्धिं विधाय स्वमतं स्वीकृतं कारयिष्यामि।

'सत्यमन्वेष्टुं कीदृशं प्रयोगं चिकीर्षसि त्वम्? जिज्ञासुना विशालेन पृष्टम्।

'त्वं खलु प्रयोगाय प्रस्तुतो भव। एष प्रयोगस्तु न खलु पारमार्थिकः। वस्तुतस्तु एकं लघुनाटकं मञ्चनीयमस्ति। ततश्च सत्यस्याऽन्वेषणं भविता। प्रकाशेन निगदितम्।

विशालेन खिन्न मनसा कथितम्- "अयि भ्रातः! प्रहेलिकां मा पृच्छ? स्पष्टतो ब्रूहि तदन्मया करणीयम्।" तदनन्तरमुभे मित्रे कस्मिंश्चिद् वैयक्तिके चिकित्सालये प्राविशताम्, यत्र खलु नगरस्यैको विशेषज्ञो डा० अविनाश महोदयः स्थितः सन्नातुराणां परीक्षणं विदधाति स्म। तदैव विशालः स्वोदरं हस्तेन धारयन् हा! मृतोऽस्म्यहमिति क्रन्दन्निव सः चिकित्सकाभिमुखमासन्द्यामसीदत। प्रकाशेन च मुहुर्मुहुरदररुजो भीषणता चिकित्सकाय प्रकटिता। ततस्तु चिकित्सकेनैकाधिका प्रश्ना कृताः ततश्च कतिपयानि गुटिकानि सूच्या च प्रवेष्टव्यं किमपि भैषजद्रवं लिखित्वा शुल्कहृते दश रूप्यकाणि याचितानि। शुल्कं प्रदाय तावुभावापणाद् भैषजं क्रेतुं प्रारिप्सताम्। चिकित्सालयाद् बहिरागत्य विशालेन प्रोक्तम् 'प्रकाश! किमेतत् मौढ्यं त्वया प्रदर्शितम्? त्वया तु व्यर्थमेव दश रूप्यकाणि प्रदत्तानि।'

प्रकाशस्त्वेतदेव कथयामास-"सत्यस्यान्वेषणं किं व्ययं विनैव सम्भाव्यते? अधुना तु त्वं मया साकं चिकित्सालयं चल।" ततश्च तौ कमप्यौषधालयमाजग्मतुः, यत्र चातुराणामत्यधिकः सम्मर्दआसीत्। विशालः प्रायः क्रन्दन्निव स्वहस्तं नाडिका-परीक्षार्थं वैद्यस्याभिमुखं प्रससार। वैद्येन च तत्परतया जठर-विकारेण रोगोत्पत्तिं निश्चीयोपचारार्थं कतिपय-भैषज्यानां नामानि लिखितानि। तेन पथ्य-सम्बन्धिन्यो विशेषा निर्देशा अपि कृताः। प्रकाशस्तु वैद्यराजाय पञ्च रूप्यकाणि दत्वा आगामि-दिवसे प्रत्यागमनं ससूच्य ततः प्रतस्थे। औषधालयाद् बहिरागत्य विशालः पुनरपि प्रकाशं पप्रच्छ डाक्तराणां वैद्यानां च कृते शुल्कं प्रदाय त्वं कीदृशं सत्यमन्वेष्टुमिच्छसि।

अयि भ्रातः! न किं त्वयैकस्यैव रोगस्य पथ्यद्वयेन सह व्याख्या-द्वयं प्रत्यक्षी-कृतम्। एकस्तु पथ्यमेव महत्त्वपूर्णमनुते। अन्यश्च कथयति यत् किमपि भक्षय पिब वा। एकस्यैव रुजो निदानं चिकित्सा च डाक्तरो वैद्यश्च पृथक्तया चिकीर्षतः। प्रकाशः तत्परतया जगाद

खिन्नेन विशालेन पृष्टम्-'साम्प्रतं किमन्यत् विधातव्यम्? तावकमिन्द्रजालं तु नावगन्तुं शक्यते मया।'

प्रकाशस्तु एतावदेव कथितवान् 'अल्पस्तावदभिनयोऽवशिष्यते।'

तनन्तरमुभे मित्रे प्रचण्ड—मार्तण्डनाम्न्या ज्योतिर्विज्ञान शालायामाजग्मतुः।

तत्र ज्योतिषाचार्यो महामान्य परमानन्द-महोदयोऽनेकैः शिष्यैः परिवृत निश्चिन्त-मुद्राया समागतानां जनानां हस्तरेखां जन्म लग्नं च दृष्ट्वा भविष्यफलं वर्णयति स्म। विशालेन तत्र गत्वा स्वोदर-विकार सम्बन्धे निवेदितं निदानाय च प्रार्थितम्। ज्योतिषाचार्येण विशालस्य ग्रहनक्षत्राणां गणनां विधाय शनैः सार्धसप्तवर्षं दशामभिधीय केतु मंगल नाम्नो पाप ग्रहयोरन्तर्दशायां प्रकोपं च प्रतिपाद्य तयो शान्त्यर्थमेकमनुष्ठानं प्रस्तावितम्। तदनु आचार्येण प्रतिदिनं पापग्रहाणां जपहवनादिना सह वचन इतरेऽपि दानपुण्यस्योपाया निर्दिष्टा। अनुष्ठानस्य विधानेनोदर विकार सदा सर्वदायै निर्वर्तिष्यते, इति स विश्वसिति स्म। अनुष्ठाने त्वनुमानतो व्ययश्चैक पञ्चाशदुत्तर शतरूप्यकात्मको वर्णितस्तेन। श्रुत्वैतत् प्रकाशस्तु ज्योतिषाचार्याय सार्धं पञ्च रूप्यकाणि प्रदायाग्रिममासस्य प्रथमतिथौ प्रत्यागन्तुं निवेदयामास। ततश्च स विशालेन सार्धं बहिरायातौ। विशालस्तु साम्प्रतं भृशमेव खिन्न आसीत्; तेनाशोकमये स्वरे कथितम् 'भ्रातः! गच्छतु त्वदीयं सत्यान्वेषणम्। अहं त्वधुना गृहमेव यामि।'

प्रकाश सानुनय निजगाद त -'मित्र! केवलमेक एव प्रयोगोऽवशिष्यते। तदनु सत्यान्वेषणं पूर्णतां यास्यति। अधुना तु मौलवि-महोदयानां पार्श्वेऽपि यास्यावः।'

ततश्च तावुभौ खुदाबक्स नाम्नः कस्यापि पीराख्यस्य गृहमयाताम्। तत्र मौलवि महोदय स्वशिष्यैरावृत आपादमस्तकं कृष्ण वस्त्रादि धारयन्नसीदत। हस्तयोस्त्वेकमासनं चिहिदृ दधार स। तदनु विशालो मौलव्याः समीपमागत्य नमश्चकार। ततश्चानन्तरं तेन स्वोदरपीडा निवेदिता। श्रुत्वैतत् परमगाम्भीर्येण मौलविना पृष्टम् 'एषु दिवसेषु त्वं कस्यचिज्जीर्णवृक्षस्य पार्श्वतस्तु नैव गतवान्?' विशालेन किञ्चिद् वक्तुमारब्धं, परं मध्य एव प्रकाशेन झटिति कथितम् 'मौलवि महोदय! मम मित्रं तु प्रतिगत्वा प्राचीनवसतौ जीर्णवटवृक्षस्य अधस्तादागत्य विवशोऽस्ति। तथा च ।

प्रकाशेन स्वकीयवचनं न पूरयितुं पारितम्। तत्पूर्वमेव मौलविना प्रोक्तम् अलं, अहमवगतमया श्वेत ध्वजा धारिणी वृद्धा पिशाचिनी तव मित्रस्य शीर्षमधिरोह। वशीकरणस्तया अपाकरणेनैव त्वन्मित्रस्योदर पीडा समाप्तिमेष्यति।

तदर्थमस्माभिः किं विधातव्यम्? 'प्रकाशेन जिज्ञासितम्।

मौलवी कथयामास- 'त्वया खलु अज-कुक्कुटयोर्बलिर्देया। अन्यच्च दञ्च-भारमितां कृष्णमाषा तदर्ध-मात्रायां च कर्पूर लवण-पुष्पादीनि गृहीत्वा-

शुक्र वासरस्य सन्ध्यायामवागन्तव्यम्। तदाऽहं सर्वमेवावशिष्टं कार्यं सुष्ठु विधास्यामि।

"बाढं मौलवि-महोदय। आवां शुक्रवासरे सायमेव वस्तून्यादायागमिष्याव।" प्रोच्यैतदुभौ तौ शीघ्रतया प्रयातुमुपचक्रतु।

'प्रतितिष्ठ तावत्। आगमनोपहाररूपेण सार्धं-पञ्च-रूप्यकाणि तु प्रयच्छ त्वम्। पौरस्य द्वारान्नेत्यमेव गन्तव्यं त्वया।' मौलविना आदेशात्मक इव स्वरे प्रोक्तम्।

'साम्प्रतं तु चतुराणकोत्तर-रूप्यकमेकं दद्व। अवशिष्टं तु शुक्रवासरस्य सायमानेतव्यमावाभ्याम्।' कथयित्वैतदुभौ रूप्यकं त्वरया प्रतस्थाते। ततश्च तौ प्रकाशस्य प्रकोष्ठे समागतौ।

विशालं सम्बोधयन् प्रकाशो जगाद- 'दृष्टं त्वया मित्र। सत्यान्वेषणं खलु दुष्करं विद्यते। डाक्टरो वैद्यो, हकीम पौरश्च सर्वे एवैकं खलु रोगरूपिणं सत्यमभिज्ञातुं कति मार्गानुपायांश्चाज्ञां कुर्वन्ति। ततोऽपि रुजो मूलं तु कश्चनैव ज्ञातुं पारयते। इत्थमेव स्वामिन सत्यानन्दमहोदया, अहं एव दार्शनिका, विचारका, धर्मगुरव, वैज्ञानिकाश्च सर्वं एव स्व-स्वपद्धत्या सत्यमन्वेषयन्ति। परं वस्तुतस्तु सत्यमनुभूतेर्विषयोऽस्ति। तदन्वेषणं स्वयमभ्यास्य विनैव स्वकीयेऽभ्यन्तरे विधातुं पार्यते। अथ च प्रयोगनिष्ठमपि सत्यमन्वेष्टुं प्रयोगास्तु कतिपये विधेया एव। एतत् खलु समाधिमग्नो भूत्वा केनाऽप्युपायेनान्येन वा साध्यम्। मन्दिरादीनि पण्डितादयश्च सर्वे मार्गस्य उपदेष्टारः सन्ति। गन्तव्यं प्रति तु स्वयमेव गमनीयम्।'

विशालेन प्रसन्न-मुद्रया निगदितम्- 'प्रकाश! धन्योऽसि त्वम्। त्वया तु यथार्थमेव सत्यान्वेषिका दृष्टिरवाप्ता। साम्प्रतमहमपि स्वयं सत्यान्वेषको भूत्वा स्वान्तः सत्यमन्विष्यामि निजेनैव प्रयासेन।'

